## त्रयोदश साधुसच्चेष्टाषोडशकम्

'दीक्षित साधु सच्चेष्टा सम्यक्करोती त्युक्तम् । तामेवोपदर्शयति –> 'गुरुविनय' इत्यादि ।

[१]गुरुविनयः [२]स्वाध्यायो [३]योगाभ्यासः [४]परार्थकरणञ्च । [५]इतिकर्तव्यतया सह विज्ञेया साधुसच्चेष्टा ॥१३/१॥

गुरुविनयादिरूपा पञ्चविधा साधूना सच्चेष्टा = शोभनबाह्यव्यापाररूपा **विज्ञेया** ॥१३/१॥ तत्र गुरुविनय-स्वरूपमाह –> **'औचित्यादि'**त्यादि ।

औचित्याद्गुरुवृत्तिर्बहुमानस्तत्कृतज्ञताचित्तम् । आज्ञायोगस्तत्सत्यकरणता चेति गुरुविनयः ॥१३/२॥

**औचित्यात्** = [१]ऊर्ध्वं भूमिकापेक्षया **गुरुवृत्ति** = गुरुविषय, [२]स्वजन्यवैयावृत्त्यप्रतियोगित्वसम्बन्धेन गुरुवृत्तिर्वा **बहुमान** = आन्तर प्रीतिविशेषो गुणानुरागात्मा, न तु मोहोदयात् । मोहो हि ससङ्गप्रतिपत्तिरूप शास्त्रे निवार्यते

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> 'गुरुविनय , [२]स्वाध्याय., [३]योगाभ्यास., [४]परार्थकरणञ्च [५]इतिकर्तव्यतया सह साधुसच्चेष्टा विज्ञेया ॥१३/१॥ योगदीपिकोक्तानार्थैव ॥१३/१॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> औचित्यात् गुरुवृत्ति. बहुमान , तत्कृतज्ञताचित्त, आज्ञायोग., तत्सत्यकरणता च इति गुरुविनयः ॥१३/२॥

ऊर्ध्व = उत्तरकाले **भूमिकापेक्षया** = स्वभूमिकानुसारेण **गुरुवृत्तिः गुरुविषयः** = गुरुगोचर , शक्यार्थप्रदर्शनाय कल्पान्तरमाह - **स्वजन्यवैयावृत्त्यप्रतियोगित्वसम्बन्धेन गुरुवृत्ति'** वेति । स्वपदेन बहुमानग्रहण, तज्जन्य यत् गुरुसम्बन्धि वैयावृत्त्य तत्प्रतियोगी गुरुर्भवति । अत. गुरौ बहुमानापेक्षया स्वजन्यवैयावृत्त्यप्रतियोगित्व वर्तते । यदपेक्षया यत्र यो धर्मो जायते स धर्म. तस्य तत्र वृत्तौ सम्बन्धो भवतीति नियमेन बहुमान. स्वजन्यवैयावृत्त्यप्रतियोगित्वसम्बन्धेन गुरुवृत्तिः भवति । **बहुमानः = आन्तरः प्रीतिविशेषः** चिन्तामणि-कामधेनु-कामकुम्भादितोऽपि समधिकस्योपादेयत्वपरिणामस्य परिज्ञानेन कृत-ज्ञतादिपरिकलितो **गुणानुरागात्मा**, एतादृशबहुमानस्य मोक्षरूपताभिधानात्, कारणे कार्योपचारात्, यथोक्त **पञ्चसूत्रे** –> आयओ गुरुबहुमाणो अवझकारणत्तणेण । अओ परमगुरुसयोगो । तओ सिद्धि असंसय । एसेह सुहोदए पगिट्ठतयणुबंधे

### ❀ रतिदायिनी ❀

'दीक्षित थयेल साधु साधुक्रियाने सुंदर रीते करे छे' आवु १२ मा षोडशकमा जणाव्यु हवे मूलकारश्री साधुनी सुंदर क्रियाने ज जणावे छे —

**<u>गाथार्थ</u>** :- [१] गुरुविनय, [२] स्वाध्याय, [३] योगाभ्यास, [४] परार्थकरण, [५] ईतिकर्तव्यता सहित साधुनी सुंदरक्रिया जाणवी [१३/१]

**<u>टीकार्थ</u>** :- गुरुविनयादिस्वरूप पाच प्रकारनी साधुओनी सुंदर बाह्यक्रियास्वरूप सच्चेष्टा = सत्क्रिया जाणवी [हवे क्रमश पाचेयनु स्वरूप कहेवाशे ] [१३/१]

आ पाचना घटकस्वरूप गुरुविनयनु स्वरूप मूलकारश्री जणावे छे —

**<u>गाथार्थ</u>** - औचित्यथी गुरुविषयक बहुमान, गुरुने विशे कृतज्ञताभाव, आज्ञायोग अने गुरुआज्ञायोगने साचो = सफळ करवो - आ गुरुविनय छे [१३/२]

### ▣ ४ प्रकारे गुरुविनय ▣

**<u>टीकार्थ</u>** .- [१] पुरुषनी ऊंची भूमिकानी अपेक्षाए औचित्य जाळवीने गुरुविषयक बहुमान भाव ए गुरुविनय कहेवाय मूळमा गुरुवृत्ति पद छे तेनो उपरोक्त अर्थ करवाना बदले गुरुमा रहेनार = गुरुनिष्ठ एवो अर्थ पण थई शके अर्थात् गुरुमा रहेनार बहुमान बहुमानने गुरुमा रहेवा माटेनो सबध छे स्वजन्यवैयावच्चप्रतियोगित्व स्व = बहुमान [बहुमान निष्क्रिय नहि पण सक्रिय लेवु अहीं अभिमत छे, शुष्क-लूखो बहुमान भाव अहीं अभिमत नथी अर्थात् जे बहुमानथी गुरुनी वैयावच्च थाय एवो बहुमान भाव वैयावच्चनु कारण छे बहुमान वैयावच्च गुरुसबधी छे अर्थात् वैयावच्चना प्रतियोगी = सबधी

१ मुद्रितप्रतौ 'ऊर्ध्वभूमिकापेक्षया' इति पाठ । २ मुद्रितप्रतौ 'स्वजनवैया ' इत्यशुद्ध पाठ ।

गुरुषु गौतमस्नेहप्रतिबन्धन्यायेन, तस्य मोक्षं प्रत्यनुपकारकत्वात् । मोक्षानुकूलस्य तु गुरुभावप्रतिबन्धस्याऽनिषेधात्, ततः सकलकल्याणसिद्धेः ।१। तथा तेषु = गुरुषु कृतज्ञताचित्तं, यथा –> 'अस्मास्वनुग्रहप्रवृत्तैर्भगवद्भिः स्वखेदमनपेक्ष्य रात्रिन्दिवं महान् प्रयासः शास्त्राध्यापनादौ कृतः <– इति ।२। तथा आज्ञया = गुरुनिर्देशेन योगः = कार्यव्यापकत्वसम्बन्धः, सर्वत्र कार्ये गुर्वाज्ञापुरस्कारित्वमिति यावत् ।३। सत्यश्च तत्करणञ्च = सत्यकरणं, तस्य

कल्याणकन्दली

भववाहितेगिच्छी । न इओ सुंदरं परं । उवमा इत्थ न विज्जइ <– [४/६] इति । आयतः = मोक्षः ।

**गौतमस्नेहप्रतिबन्धन्यायेनेति** । वीरं प्रति गौतमरागस्य केवलज्ञानप्रतिबन्धकत्वात्, केवलानुत्पत्त्या खिन्नं गौतमं प्रति केवलानुत्पादहेतुतया श्रीवीरेण व्याख्याप्रज्ञप्तौ –> गोयमा ! चिरसंसिट्ठोऽसि मे, गोयमा ! चिरसंथुओऽसि मे, गोयमा ! चिरपरिचिओऽसि मे, गोयमा ! चिरजुसिओऽसि मे, गोयमा ! चिराणुगओऽसि मे, गोयमा ! चिराणुवत्तीसि मे <– [१४/७/५२१] इत्युक्तम् । ततश्च स्नेहरागादिरहिततयाऽसङ्गप्रतिपत्तिर्गुरोः कर्तव्या एकान्तानभिष्वङ्गानुष्ठानस्य श्रेयस्त्वात्, अनेन रूपेण तत्कात्स्न्याराधनात् । इदमेवाभिसन्धायापरैरपि –> 'तत्त्वाभिष्वङ्गस्यापि तत्त्वतोऽतत्त्वात्, वस्त्रादिशुद्धिविधौ अञ्जनकल्पत्वात्, धर्मरागादपि मुनिर्मुनिः <– [यो श गा.१ वृ पृ ३०] इत्युच्यते । तदुक्तं **दशवैकालिकचूर्णौ** अपि –> ममत्तभावं न कहिं पि कुज्जा <– [२/८] इति ।

गुरुषु कृतज्ञताचित्तं, शरणत्वबुद्ध्या, यथोक्तं **योगशतके** –> सरणं गुरू उ इत्थं <– [४८] । ततश्च सानुबन्धविशुद्धगुणवृद्धिः । यथोक्तं **धर्मरत्नप्रकरणे** –> बहुमन्नइ धम्मगुरुं परमुवयारित्ति तत्तबुद्धीए । तत्तो गुणाण वुड्ढी गुणारिहो तेणिह कयण्णू ॥२६॥ <– इति । प्रणामादिव्यङ्ग्यात् गुरुबहुमानात् गुर्वनुग्रहो जायते, यथोक्तं **योगशतके** –> गुरुदेवयाहि जायइ अणुग्गहो अहिगयस्स तो सिद्धी । एसो य तन्निमित्तो तहाऽऽयभावाओ विण्णेओ ॥६२॥ <– इति । अत एव गुरुकुलवासः प्रधानोपदेशः साधूनां, तदुक्तं **योगशतक** एव –> जइणो उण उवएसो सामायारी जहा समत्ता । गुरुकुलवासो गुरुतंतया य उचियविणयस्स करणं च ॥ <– [३२/३३] इति । गुरुविनयादिमाहात्म्येन न कदाप्युन्मार्गे प्रवर्तते, तथाविधक्षयोपशमप्रादुर्भावात्, तदुक्तं **योगशतके** एव –> मग्गेण गच्छंतो सम्मं सत्तीए इट्ठपुरपहिओ । जह तह गुरुविणयाइसु पयट्टओ एत्थ जोगि त्ति ॥७॥ <– इति । अत एव श्रुतग्रहणोत्तरकालेऽपि नमनशीलस्य मेधावित्वं तत्त्वत उपपद्यते । तदुक्तं **उत्तराध्ययने** –> नच्चा नमइ मेहावी <– [१/५] । **आज्ञया = गुरुनिर्देशेन योगः** = कार्यव्यापकत्वसम्बन्धः = स्वकार्ये व्यापकत्वसंसर्गः, यत्र यत्र स्वीयकर्तव्यता तत्र तत्र गुरुनिर्देशसम्बद्धत्वं, सर्वत्र कार्ये **गुर्वाज्ञापुरस्कारित्वमिति यावत्** । यद्वा आज्ञायोगः = भगवदाज्ञायोगः = 'यो मां प्रतिमन्यते स गुरुं' इति जिनाज्ञापुरस्कारित्वमिति यावत्, तदुक्तं **पञ्चसूत्रे** –> गुरुं च बहु मन्नइ । जहोचियं असंगपडिवत्तीए निसग्गपवित्तिभावेण । एसा गुरुई विआहिआ भावसारा विसेसओ । भगवंतबहुमाणेणं 'जो मं पडिमन्नइ से गुरुं' ति तदाणा <– [४/५] । मूलकारकृता तद्व्याख्या चैवं –> गुरुं च बहु मन्यते भाववैद्यकल्पम् । कथं ? इत्याह-यथोचितं = औचित्येन, असङ्गप्रतिपत्त्या = स्नेहरहिततद्भावप्रतिपत्त्या । किमस्या उपन्यासः ? इत्याह निसर्गप्रवृत्तिभावेन = सांसिद्धिकप्रवृत्तित्वेन हेतुना,

ગુરુ બને છે. બહુમાનજન્ય વૈયાવચ્ચના પ્રતિયોગી એવા ગુરુમાં બહુમાનજન્યવૈયાવચ્ચપ્રતિયોગિતા ધર્મ રહે છે. જેની અપેક્ષાએ જ્યાં જે ધર્મ ઉત્પન્ન થાય તે ધર્મ તેને ત્યાં રહેવા માટે સંબંધ બને - આ નિયમ અનુસાર બહુમાનની અપેક્ષાએ ગુરુમાં જે સ્વજન્યવૈયાવચ્ચપ્રતિયોગિત્વ ધર્મ ઉત્પન્ન થાય છે તે ધર્મ બહુમાનને ગુરુમાં રહેવા માટે સંબંધ બનશે. માટે] બહુમાન સ્વજન્યવૈયાવચ્ચ-પ્રતિયોગિત્વસંબંધથી ગુરુમાં રહે છે. બહુમાન = ગુણાનુરાગસ્વરૂપ આંતરિક પ્રીતિવિશેષ. મોહના ઉદયથી જે પ્રીતિ થાય તે અહીં બહુમાનશબ્દના અર્થ તરીકે ન લઈ શકાય, કારણ કે મોહ એ સંગ-આસક્તિયુક્ત પ્રતિપત્તિ = મમત્વ સ્વરૂપ છે. ગુરુને વિશે તેવો મોહ શાસ્ત્રમાં નિષિદ્ધ છે. આનો દાખલો છે ગૌતમસ્વામીજીની પોતાના ગુરુ મહાવીર પ્રત્યેના સ્નેહની પક્કડ. મોહોદયજન્ય ગુરુપ્રેમ મોક્ષ પ્રત્યે ઉપકારક નથી. ગુરુ પ્રત્યે આંતરિક લાગણી મોક્ષાનુકૂળ હોય તો તેનો શાસ્ત્રમાં નિષેધ નથી, કારણ કે મોક્ષને અનુકૂળ એવી ગુરુપ્રીતિથી બધા જ કલ્યાણની સિદ્ધિ થાય છે.

[૨] તથા ગુરુ પ્રત્યે કૃતજ્ઞતાસભર મન, જેમ કે 'આપણા ઉપર ઉપકાર કરવામાં પ્રવૃત્ત થયેલ ગુરુ ભગવંતે પોતાના પરિશ્રમ-થાકને ગણકાર્યા વિના, શાસ્ત્ર ભણાવવા વગેરેમાં, રાત-દિવસ ઘણી મોટી મહેનત કરી છે.' આમ કૃતજ્ઞતાગર્ભિત ભાવ રાખવો એ ગુરુવિનય છે. [૩] તેમ જ ગુરુના નિર્દેશની = આજ્ઞાની સાથે કાર્યવ્યાપકતા જોડવી એ છે આજ્ઞાયોગ. [કાર્યની વ્યાપકતા ગુરુઆજ્ઞાની સાથે જોડવી એનો અર્થ એ થયો કે કાર્યનું વ્યાપક ગુરુઆજ્ઞા બને. તથા કાર્ય એ ગુરુઆજ્ઞાનું વ્યાપ્ય બને-તેમ કરવું.

आज्ञायोगस्य सत्यकरण = तत्सत्यकरण, तदेव तत्ता, स्वार्थे तल्, आज्ञाफलसम्पादकत्वमिति यावत् ।४। एष सर्वोऽपि **गुरुविनय**, गुरुप्रीत्यर्थबाह्यव्यापारत्वात् ॥१३/२॥ स्वाध्यायमाह –> 'यत्त्वि'त्यादि ।

**यत्तु खलु वाचनादेरासेवनमत्र भवति विधिपूर्वम् । धर्मकथान्तं क्रमशः तत्स्वाध्यायो विनिर्दिष्टः ॥१३/३॥**

**यत्तु** = यत्पुन, **खलु**शब्दो वाक्यालङ्कारे, **वाचनादे** = वाचना-प्रश्न-परावर्त्तनादे **आसेवन** = अभिव्याप्त्या मर्यादया वा प्रवचनोक्त्या सेवन = करण, **अत्र** = प्रक्रमे **भवति** = जायते **विधिपूर्वं** = विधिमूल **धर्मकथान्त** = धर्मकथाऽवसान **क्रमश** = क्रमेण **तत्** = आसेवन **स्वाध्यायो विनिर्दिष्ट** = कथित, सुष्ठु = शोभन आ =

कल्याणकन्दली

एषा = असङ्गप्रतिपत्ति. गुर्वी व्याख्याता भगवद्भि । किमिति ? अत आह - भावसारा = तथौदयिकभावविरहेण विशेषत. असङ्गप्रतिपत्ते । इहैव युक्त्यन्तरमाह-**भगवद्बहुमानेन** = अचिन्त्यचिन्तामणिकल्पतीर्थकरप्रतिबन्धेन । कथमय ? इत्याह- 'यो मा प्रतिमन्यते भावतः स गुरु' इत्येव तदाज्ञा = भगवदाज्ञा । इत्थ तत्त्व व्यवस्थितम् <– [प सू ४/५-पृ.१३/१४] ।

**आज्ञायोगस्य सत्यकरणमिति** । तदुक्त **उत्तराध्ययने** –> आणाणिद्देसकरे, गुरूणमुववायकारए । इगियागारसपन्ने से विणीए त्ति वुत्तइ ॥[१/२] <– इति । तदुक्त **धर्मबिन्दौ** अपि –> तथा सदाज्ञाकरणमिति <– [५/५] । तत्रैव दीक्षाया निष्ठत्वात्, यथोक्त **बृहदारण्यकोपनिषदि** –> कस्मिन्नु दीक्षा प्रतिष्ठिता ? सत्ये <– [३/९/२३] । **महाभारतेऽपि** –> अहिंसा परमो धर्म· स च सत्ये प्रतिष्ठित. । सत्ये कृत्वा प्रतिष्ठा तु प्रवर्तन्ते प्रवृत्तय. ॥ <– [वनपर्व-२०७/७४] इति प्रोक्तम् । उपलक्षणात् गुरुणा सह हित-मितापरुषभाषित्वादिकमप्यत्र गुरुविनयरूपेणावगन्तव्यम्, तदुक्त **दशवैकालिकनिर्युक्तौ** –> हिअ-मिअ-अफरुसवाई अणुविइभासि वाइओ विणीओ <– [३३३] इति । गुरुपारतन्त्र्यफलमाहात्म्यादिक तु प्रागुक्त [षो.२/१० पृ.४९] अत्रानुसन्धेयम् । **उत्तराध्ययने** –> अब्भुट्ठाण अजलिकरण तहेवासणदायण । गुरुभत्तिभावसुस्सूआ विणओ एस वियाहिओ ॥ <– [३०/३२] इत्येव पञ्चविधो विनय उक्त. । **धर्मरत्नकरण्डके श्रीवर्धमानसूरिभि·** –> गुर्वादिषु शुभ चित्त विनयो मानसो मत । हित मित प्रिय वाक्य विनयस्तेषु वाचिकः ॥२९४॥ कायिकश्च यथाशक्ति तत्कार्याणा प्रसाधक. । सर्वथाऽऽशातनात्याग सर्वदा नीचवर्तिता ॥२९५॥ <– इत्येव त्रिधा गुरुविनय प्रदर्शित ॥१३/२॥

गुरुविनयकरणादेव स्वाध्यायग्रहणयोग्यो भवतीत्यवसरसङ्गतिप्राप्त स्वाध्यायमाह । मूलग्रन्थे दण्डान्वयस्त्वेवम् –> यत्तु खलु विधिपूर्व वाचनादे· आसेवन धर्मकथान्त भवति तत् अत्र स्वाध्यायो विनिर्दिष्ट ॥१३/३॥

**अभिव्याप्त्या मर्यादया वेति** । अवधि = मर्यादा, अभिव्याप्तिरपि अभिविध्यपराभिधाना मर्यादाविशेष एव । इयास्तु तद्भेद प्रवृत्तस्य यत्र निरोध स मर्यादा, मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिरिति [सि हे २/२/७०] व्यक्त **सिद्धहेमलघुन्यासे** । विधिपूर्वमिति । तत्र श्रवणविधि प्रागुक्त. [२/९+११/४] एव ।

**धर्मकथावसान** = धर्मकथान्त, तदुक्त **व्याख्याप्रज्ञप्तौ** –> से कि त सज्झाए ? पचविहे सज्झाए पन्नत्ते, त जहा- ¹वायणा, ²पडिपुच्छणा, ³परियट्टणा, ⁴अणुप्पेहा, ⁵धम्मकहा । से त सज्झाए <– [श २५ उ ७ सू.८०२] । **उत्तराध्ययनेऽपि** –> वायणा पुच्छणा चेव तहा य परियट्टणा । अणुप्पेहा धम्मकहा सज्झाओ होइ पचहा ॥ <– [३०/३४] इत्युक्तम् ।

અર્થાત્ પોતાના જે જે કાર્ય હોય તે તે કાર્ય ગુરુઆજ્ઞાયુક્ત જ હોય] મતલબ કે સર્વ કાર્યમા ગુરુની આજ્ઞાને આગળ કરવી આ ગુરુવિનય છે [૪] તથા આજ્ઞાયોગને સાચો બનાવવો (= ગુરુનુ કહેલુ કરવુ) મૂળ ગાથામા કરણતા શબ્દને જે તલ્ પ્રત્યય લાગેલ છે તે સ્વાર્થમા છે અર્થાત્ કરણ એ જ કરણતા (જેમ કે બાળ એ જ બાળક ક પ્રત્યય બાળ શબ્દને સ્વાર્થમા છે મતલબ કે બાળ શબ્દને છેડે લાગેલ ક પ્રત્યય બાળશબ્દના અર્થમા જ પ્રવૃત્ત થયેલ છે, ભાવ અર્થમા નહિ તેમ તલ્ પ્રત્યય = 'તા' કરણ શબ્દને છેડે લાગેલ છે તે કરણપદના અર્થમા જ પ્રવૃત્ત થયેલ છે, ભાવ અર્થમા નહિ ) મતલબ કે ગુરુ આજ્ઞાનુ કાર્ય સપન્ન કરવુ = ગુરુઆજ્ઞા પાળવી એ ગુરુઆજ્ઞાસત્યકરણતા છે આ બધાય પ્રકારો ગુરુવિનયના છે, કારણ કે તે બધાય પ્રકારો ગુરુની પ્રીતિ માટે = ગુરુપ્રસન્નતાના ઉદ્દેશથી થનાર બાહ્ય ક્રિયાસ્વરૂપ છે [૧૩/૨]

ગ્રથકારશ્રી [અવસરસગતિથી પ્રાપ્ત થયેલ] સ્વાધ્યાયને જણાવે છે

**ગાથાર્થ** .- વિધિપૂર્વક ક્રમશ વાચના વગેરેથી માડીને ધર્મકથા સુધીનુ મર્યાદાથી જે સેવન કરાય એ અહીં સ્વાધ્યાય કહેવાયેલ છે [૧૩/૩]

## સ્વાધ્યાય પ્રતિપાદન

**ટીકાર્થ** - ગાથામા ખલુ શબ્દ વાક્યની શોભામા છે તુ પદ 'પુન ' પદાર્થપરક છે વાચના, પૃચ્છના, પરાવર્તન અને આદિપદગ્રાહ્ય

अभिव्याप्त्या अध्ययनं = स्वाध्यायः, स्वं स्वकीयमध्ययनं वा स्वाध्याय इति व्युत्पत्तेः ॥१३/३॥

योगाभ्यासमाह --> 'स्थाने'त्यादि ।

स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं सम्यक् । परतत्त्वयोजनमलं योगाभ्यास इति तत्त्वविदः ॥१३/४॥

स्थीयतेऽनेनेति स्थानं = आसनविशेषः कायोत्सर्ग-पर्यङ्कबन्धादिरूपः । उर्णः = शब्दः । अर्थः = तदभिधेयम् । आलम्बनं = बाह्यो विषयः प्रतिमादिः । तस्मात् = आलम्बनात् अन्यः = अनालम्बन इति यावत् । तेषां परिभावनं = सर्वतोऽभ्यसनं सम्यक् = समीचीनम् । परं तत्त्वं मोक्षलक्षणं योजयति यत्तत्तथा, एतद् **योगाभ्यास इति तत्त्वविदो** विदन्ति, योगस्य ध्यानरूपस्याभ्यास इति कृत्वा ।

**कल्याणकन्दली**

शोभनं अभिव्याप्त्या अध्ययनं = स्वाध्याय इति । अत एव तस्य प्रकृष्टतपोधर्मता, यथोक्तं **बृहत्कल्पभाष्ये** --> नवि अत्थि नवि अ होही सज्झायसमं तवोकम्मं <-- [११६९] इति । अनेन तस्य प्रधानं मोक्षाङ्गत्वमावेदितम् । यथोक्तं --> एसो सव्वन्नुत्तं तित्थयरत्तं च जायइ कमेण । इअ परमं मोक्खंगं सज्झाओ तेण विन्नेओ ॥ <-- [ ] इति । अत एव धारणाशक्तिविकलेनाऽपि स्वाध्याये उद्यमः कर्तव्य एव, तदुक्तं **पुष्पमालायां** --> मेहा हुज्ज न हुज्ज व लोए जीवाण कम्मवसगाणं । उज्जोओ पुण तह वि हु, नाणंमि सया न मोतव्वो ॥ जइवि हु दिवसेण पयं, धरेइ पक्खेण वा सिलोगद्धं । उज्जोयं मा मुचसु, जइ इच्छसि सिक्खिउं नाणं ॥ <--[२८/२९] इति । ज्ञानप्राप्तिपुरुषार्थस्येहाऽमुत्र ज्ञानावरणक्षयोपशमादेरवन्ध्य-कारणत्वात्, --> 'सज्झाएणं णाणावरणिज्जं कम्मं खवेइ' <--[२०/२९] इति **उत्तराध्ययनसूत्रवचनात्** । इदमेवाभिप्रेत्यान्यत्रापि --> थेवो थेवो वि वरं कायव्वो नाणसंगहो निच्चं । सरिआओ किं न पेच्छह विंदुहिं समुद्दभूयाओ ?॥ <-- [ ] इत्युक्तम् । --> ज्ञानधनानां हि साधूनां किमन्यद् वित्तं स्यात् <--[१/१४] इति व्यक्तं **सूत्रकृताङ्गचूर्णौ** । --> स्वाध्यायादिष्टदेवतासम्प्रयोगः <-- [२/४४] इति **योगसूत्रकारः** । स्वाध्यायविरहे प्रव्रज्या नास्ति, तदुक्तं **व्यवहारसूत्रभाष्ये** --> नाणं अभंतमि चरित्ति पि न विज्जए <-- [७/२/१७] इति भावनीयं तत्त्वमेतत् ॥१३/३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> सम्यक् स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं अलं परतत्त्वयोजनं योगाभ्यास इति तत्त्वविदः ॥१३/४॥ इयञ्च कारिका **योगविंशिकावृत्त्यादौ** [गा २ वृ पृ ४] समुद्धृता वर्तते ।

[१] कायोत्सर्ग-पर्यङ्कबन्धादिरूपो वक्ष्यमाणस्वरूपः [१४/१० पृ ३३२] । [२] उर्णः = शब्दः, स च क्रियादावुच्चार्यमाण-सूत्रवर्णलक्षणो बोध्यः । [३] अर्थः = तदभिधेयः = शब्दवाच्यः शब्दप्रतिपाद्यगोचरव्यवसाय इति यावत् । [४] **आलम्बनं = बाह्यो विषयः प्रतिमादिः** बाह्यप्रतिमादिविषयध्यानमिति भावः । [५] **अनालम्बनः** = रूपिद्रव्यात्मकालम्बनरहितो निर्वि-कल्पकचिन्मात्रसमाधिस्वरूप इति यावत् । अत्राऽऽद्यद्वयं कर्मयोगः शेषत्रितयञ्च ज्ञानयोगः, तदुक्तं **योगविंशिकायां** --> ठाणुन्नत्थालंबणरहिओ तंतम्मि पंचहा एसो । दुगमित्थ कम्मजोगो तहा तियं नाणजोगो उ ॥२॥ <-- इति । निश्चयेनैतदधि-कारिता श्राद्ध-साध्वोः ज्ञेया, व्यवहारतस्तु देश-सर्वचारित्रव्यतिरिक्तस्याऽपुनर्बन्धकादेरप्यधिकारिता, निश्चयस्तु अपुनर्बन्धकादेर्योग-बीजमेवेच्छति । तदुक्तं **योगविंशिकायां**--> देसे सव्वे य तहा नियमेणेसो चरित्तिणो होइ । इयरस्स बीयमेत्तं इत्तु च्चिय

અનુપ્રેક્ષા તથા ધર્મકથાપર્યન્તનું અભિવ્યાપ્તિથી કે શાસ્ત્રોક્ત મર્યાદાથી પ્રસ્તુતમાં વિધિપૂર્વક ક્રમસર જે સેવન થાય તે સ્વાધ્યાય કહેવાયેલ છે. सु + आ + अध्याय = स्वाध्याय । सु = सुंदर, आ = અભિવ્યાપ્તિથી [એકાગ્રતાથી - મગ્નતાથી] જે અધ્યયન થાય તે સ્વાધ્યાય કહેવાય, કારણ કે 'પોતાનું અધ્યયન કે સ્વસંબંધી અધ્યયન = સ્વાધ્યાય' આવી સ્વાધ્યાયપદની વ્યુત્પત્તિ છે. [૧૩/૩]

ગ્રંથકારશ્રી યોગાભ્યાસને કહે છે.

<u>**ગાથાર્થ**</u> - સ્થાન, વર્ણ, અર્થ, આલંબન અને અનાલંબન યોગનો ચારે બાજુથી સુંદર રીતે અભ્યાસ કરવો. કારણ કે પર તત્ત્વને અત્યંત જોડે એ યોગાભ્યાસ છે - એમ તત્ત્વવેત્તાઓ કહે છે. [૧૩/૪]

## ચાલો, યોગાભ્યાસ કરીએ

<u>**ટીકાર્થ**</u> :- [૧] જેના દ્વારા ઉભા રહી શકાય કે બેસી શકાય અર્થાત્ સ્થિર રહી શકાય તે સ્થાન કહેવાય. કાયોત્સર્ગ, પર્યંકબંધ વગેરે સ્વરૂપ વિશેષ પ્રકારના આસનો સ્થાન તરીકે જાણવા. [૨] ઉર્ણ = વર્ણ એટલે કે સૂત્રના શબ્દ. [૩] સૂત્રના પદનો વાચ્યાર્થ. [૪] પ્રતિમાદિસ્વરૂપ બાહ્ય વિષય = આલંબન. [૫] આલંબનથી ભિન્ન અર્થાત્ અનાલંબન [પર્યુદાસપ્રતિષેધ]. આ પાંચેય યોગોનો સર્વ બાજુથી સારી રીતે અભ્યાસ કરવો એ યોગાભ્યાસ કહેવાય, કારણ કે તે મોક્ષસ્વરૂપ પર તત્ત્વને = શ્રેષ્ઠ તત્ત્વને

यदि चित्तवृत्तिनिरोधो योगलक्षणं तदा स्थानादीनां योगाङ्गत्वेऽपि योगत्वोपचारः । यदि च [1]मोक्षयोजकव्यापारत्वमात्रं तदा नोपचार इति ध्येयम् ॥१३/४॥

कल्याणकन्दली

केइ इच्छन्ति ॥३॥ <- इति ।

**योगस्य ध्यानरूपस्य अभ्यास** इति । इत्थमेव वक्ष्यमाणानालम्बनध्यानसिद्धेः, तदुक्तम् -> अभ्यासेन जिताहारोऽभ्यासेनैव जितासनः । अभ्यासेन जितश्वासौऽभ्यासेनैवानिलत्रुटिः ॥ अभ्यासेन स्थिरं चित्तमभ्यासेन जितेन्द्रियः । अभ्यासेन परानन्दोऽभ्यासेनैवात्मदर्शनम् ॥ अभ्यासवर्जितैर्ध्यानैः शास्त्रस्थैः फलमस्ति नो । भवेन्न हि फलैस्तृप्तिः पानीयप्रतिबिम्बितैः ॥[ ]<- इति ।

यदि 'योगः चित्तवृत्तिनिरोधो' [पा.यो.सू. १/२] इति **पातञ्जलयोगसूत्रात् चित्तवृत्तिनिरोधः** = चित्तनिष्ठवृत्तिनिरोधत्वं **योगलक्षणं तदा** 'यम-नियमाऽऽसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि योगस्य' [पा.यो.सू. २/२९] इति **पातञ्जलयोगसूत्रेण स्थानादीनां योगाङ्गत्वेऽपि** हेतु-फलभावेन **योगत्वोपचारः** इति । **सुगमार्थकल्पनावृत्तिकृतः श्रीयशोभद्रसूरेः** मतमुक्त्वा साम्प्रतं स्वाभिप्रेतमावेदयति - **यदि च मोक्षयोजकव्यापारत्वमात्रं** = 'मोक्षकारणीभूताऽऽत्मव्यापारत्वं योगत्वं' इति योगलक्षणं सम्मतं **तदा न** स्थानादिषु योगत्वस्य **उपचारः**, शक्यार्थाऽबाधात् । ज्यायानयमेव पक्षः, लक्षणाया जघन्यवृत्तित्वात्, ऋजुगत्या सिध्यतोऽर्थस्य वक्रेण साधनाऽयोगात् । अत्र स्थानादिषु स्थानोर्णलक्षणं द्वयं कर्मयोग एव, स्थानस्य साक्षात् ऊर्णस्याऽप्युच्चार्यमाणस्यैव ग्रहणादुच्चारणांशे क्रियारूपत्वात् । तथाऽर्थालम्बनानालम्बनलक्षणं त्रितयं ज्ञानयोग एव, अर्थादीनां साक्षाद् ज्ञानरूपत्वादिति । एवं स्थानादिषु प्रत्येकं इच्छा-प्रवृत्ति-स्थैर्य-सिद्धिभेदान्नानात्वमपि बोध्यम् । व्यवहारतोऽपुनर्बन्धकादयो हि स्थानादियोगस्वामिनः निश्चयनयेन तु चारित्रिण एवेति विवेकः इत्यादिकं व्यक्तं **योगविंशिकाटीकायाम्** [गा २/३/४] । प्रकृते 'मुक्खेण जोयणाओ जोगो सव्वो वि धम्मववारो' [यो.विं. १] इति **योगविंशिकावचनात्** समिति-गुप्तिसाधारणधर्मव्यापारत्वमेव योगत्वमिति मीमांसितवन्तः टीकाकृतः 'योगश्चित्तवृत्तिनिरोधः' [१/२] इति **योगसूत्रटिप्पणे** । **योगविंशिकावृत्तौ** अपि मोक्षकारणीभूताऽऽत्मव्यापारत्वस्यैव योगलक्षणत्वमावेदितम् [१] । **योगशतकवृत्तौ** निश्चयत आत्मनि ज्ञानादित्रितयसम्बन्धस्य व्यवहारतस्तु तत्कारणस्य योगत्वमाविष्कृतम् [गा २] । अग्रे च तत्रैव -> सर्वत्रोचितानुष्ठानं योगः <- इति निष्टङ्कितमिति [गा २२] ध्येयम् । **अधिकारविंशिकावृत्तौ श्रीसागरानन्दसूरिभिस्तु** -> केचित्तु 'योगश्चित्तवृत्तिनिरोधः' इत्याहुः योगलक्षणम् । तन्न चारु, यतोऽत्राश्रीयते को धातुः तैः 'युजिच् समाधौ' 'युजृपी योगे' इत्यनयोः ? यतो नैकोऽपि तदीयमनोरथव्रततिवृद्धये प्रभवति । आद्ये समाधेर्योगाङ्गत्वेन स्वीकाराद् अङ्गाङ्गिभावो भज्येत । योग-समाध्योरन्यत्र तु धात्वर्थ एव लक्षणविरोधी, निरोधविरुद्धत्वाद्योगस्य । न चैवं भवति योगारम्भक्रियाया योगत्वं, तदा चित्तवृत्तेरनिरोधात्, कायवाङ्निरोधयोश्च योगत्वाभावाप्तेरनिष्टैव । न च निर्विकल्पकसमाधावपि सर्वथा चित्तवृत्तिनिरोधः, तथा सति जडत्वापातात् किन्तु निरोध इव निरोधः । तथा चोपचरितमेव लक्षणं, न तत्त्वतः <- [गा १५] इत्युक्तम् । 'समत्वं योग उच्यते' [म.भा.शा.प. २६/२८] इति **महाभारते** ।

આત્મા સાથે અત્યંત જોડે છે-એમ તત્ત્વવેત્તાઓ જાણે છે. તે ધ્યાનસ્વરૂપ યોગનો અભ્યાસ હોવાના કારણે આમ જાણવું. જો યોગનું લક્ષણ 'ચિત્તવૃત્તિનિરોધ' એમ માન્ય કરવામાં આવે તો સ્થાન = આસન વગેરે યોગના અંગ હોવા છતાં તેમાં યોગપણાનો - તાદાત્મ્યથી યોગનો ઉપચાર જાણવો. અને જો યોગનું લક્ષણ 'મોક્ષયોજક વ્યાપારવત્ત્વ' માન્ય કરો તો ઉપચાર કરવો જરૂરી નહિ બને [કારણ કે તેમાં યોગપદનો મુખ્યાર્થ અબાધિત છે.] આ ધ્યાનમાં રાખવું. [૧૩/૪]

**વિશેષાર્થ** :- સ્થાન વગેરે પાંચની યોજના આપણે ચૈત્યવંદનમાં વિચારીએ. [૧] યોગમુદ્રામાં [૨] સૂત્રના પદોમાં ઉપયોગ રાખીને [૩] સૂત્રના પદાર્થોની ધારણા કરીને, [૪] જિનપ્રતિમા વિશે દૃષ્ટિ સ્થિર કરીને અથવા મનમાં જિનપ્રતિમા-આકારનું ભાવન કરતા ચૈત્યવંદન કરવા દ્વારા અતીન્દ્રિય પરમાત્મતત્ત્વમાં મનને જોડવાથી સ્થાન, વર્ણ, અર્થ, આલંબન અને અનાલંબન આ પાંચેય યોગોનો સર્વતોમુખી સુંદર રીતે અભ્યાસ = પરિભાવન કરવાથી મોક્ષ સાથે આત્માનું જોડાણ થાય છે.

ધ્યાનસ્વરૂપ યોગના અભ્યાસસ્વરૂપ હોવાથી પાંચેય યોગોની પરિભાવના યોગાભ્યાસ કહેવાય છે.

[A] પાતંજલયોગસૂત્રમાં 'યોગઃ ચિત્તવૃત્તિનિરોધઃ' આમ જણાવેલ છે. પતંજલિ ઋષિના મતે [૧] યમ, [૨] નિયમ, [૩] આસન, [૪] પ્રાણાયામ, [૫] પ્રત્યાહાર, [૬] ધારણા, [૭] ધ્યાન અને [૮] સમાધિ - આ આઠ યોગના અંગો છે. તેથી સ્થાન, વર્ણ વગેરે યોગ નહિ પણ યોગના અંગ છે. તેથી સ્થાનાદિનો અભ્યાસ યોગાભ્યાસ નહિ પણ યોગાંગઅભ્યાસ બને.

१ मुद्रितप्रतौ 'मोक्षयोजकव्यापारित्वमात्रं' इति पाठः ।

परार्थकरणमाह --> **विहिते**'त्यादि ।

**विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्वं परार्थकरणं यतेर्ज्ञेयम् ॥१३/५॥**

विहित = शास्त्रोक्तं यत् अनुष्ठानं तत्परस्य = तन्निष्ठस्य **तत्त्वत** = परमार्थेन **योगशुद्धिसचिवस्य** = विशुद्धमनोवाक्काययोगस्य **भिक्षाटनादि** = आहारैषणादि, आदिना वस्त्र-पात्रैषणादिग्रहः **सर्वं** = निरवशेषं अनुष्ठानं

कल्याणकन्दली

भगवद्गीतायां च --> योगः कर्मसु कौशलम् <-- [२/५०] इत्युक्तम् । महोपनिषदि तु --> मनःप्रशमनोपायो योग इत्यभिधीयते <-- [५/४२] इत्युक्तम् । बौद्धमतेऽपि कुशलप्रवृत्तेः योगत्वम् । दैवागुरुवृत्तीनां निरोधो योग इति अन्ये । चित्तवृत्तेर्विषयान्तरतिरस्कारेणात्मस्थैर्यं योग इति परे । स्वरूपाऽवस्थितिहेतु-चित्तवृत्तिनिरोधो योग इत्यपरे । कुलार्णवतन्त्रे च --> ऐक्यं जीवात्मनोराहुर्योगं योगविशारदा <-- [३०/१] इत्युक्तं, तत्र ऐक्यं = सादृश्यप्रकटीकरणमिति विभावनीयं पर्युपासितगुरुकुलैः मनीषिभिः । स्वाध्याय-योगाभ्यासवशात् परतत्त्वप्राप्तिः, यथोक्तं विष्णुपुराणे --> स्वाध्यायाद्योगमासीत, योगात् स्वाध्यायमामनेत् । स्वाध्याय-योगसम्पत्त्या परमात्मा प्रकाशते ॥ <-- [६/६/२] इति ॥१३/४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य यतेः भिक्षाटनादि सर्वं परार्थकरणं ज्ञेयम् ॥१३/५॥

आहारैषणादीति । आहारपदेन पिण्ड-पानकयोः ग्रहणम् । पिण्डाद्येषणा संसृष्टादिभेदेन सप्तविधा बोध्या, तदुक्तं प्रवचनसारोद्धारादौ --> ससट्ठमसंसट्ठा उद्धड तह अप्पलेविया चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ [प्र.सारो. ७३९] <-- इति । वस्त्र-पात्रैषणादिग्रह इति । वस्त्रैषणा च --> जत्र तयट्ठा कीयं नेव वुयं नेव गहियमन्नेसिं । आहडपामिच्चं चिय कप्पए साहुणो वत्थं ॥८४९॥ <-- इत्यादिना प्रवचनसारोद्धारादौ दर्शिता बोध्या । इयञ्च सामान्यतोऽवसेया । निर्ग्रन्थानां वस्त्रैषणाविधिस्तु बृहत्कल्पसूत्रे --> निग्गंथं च णं गाहावइकुलं पिंडवायवडियाए अणुपविट्ठं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पायपुंछणेण वा उवनिमंतेज्जा कप्पइ से सागारकडं गहाय आयरियपायमूले ठवेत्ता दोच्चं पि उग्गहं अणुण्णवित्ता परिहारं परिहरित्तए । निग्गंथं च णं बहिया वियारभूमिं वा विहारभूमिं वा निक्खंतं समाणं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पायपुंछणेण वा उवनिमंतेज्जा, कप्पइ से सागारकडं गहाय आयरियपायमूले ठवित्ता दोच्चं पि उग्गहं अणुण्णवित्ता परिहारं परिहरित्तए <-- [उ.१ सू.४०/४१] इति दर्शितः । श्रमणानां वस्त्रैषणाविधिः तदपवादादिकञ्च प्रकल्पग्रन्थेभ्योऽवसेयम् । सामान्यतस्तु वस्त्रग्रहणादिसमये कल्पनया नव भागान् कृत्वा तदवलोकनादिकमपि कर्तव्यम् । निर्दोषे सति च दर्शितरीत्या तद् ग्राह्यम् । नवभागविधिश्च वस्त्रे --> नव भागकए वत्थे चउरो कोणा य दुन्नि अंता य । दो कन्नावट्टीओ मज्झे वत्थस्स एक्कं तु ॥ चत्तारि देवया भागा, दुवे भागा य माणुसा । आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥ <-- [ ] इत्यादिना बोध्यः ।

पात्रैषणाविधिश्च स्थानाङ्गसूत्रे --> कप्पइ णिग्गंथाण वा णिग्गंथीण वा तओ पायाइं धारित्तए वा परिहरित्तए वा, तं

છતાં પણ પ્રસ્તુતમાં સ્થાન વગેરે પાંચેયમાં યોગપણાનો - તાદાત્મ્યથી યોગનો આરોપ કરવાના લીધે તે પાંચેયના અભ્યાસને યોગાભ્યાસ કહી શકાય. [B] પરંતુ યોગનું જૈનદર્શનસંમત લક્ષણ 'યોગ = મોક્ષયોજકવ્યાપારવત્ત્વ' સ્વીકારવામાં આવે તો સ્થાન વગેરે પાંચેય યોગસ્વરૂપ જ છે, કારણ કે તે પાંચેય શૈલેશીકરણ દ્વારા આત્માને મોક્ષ સાથે જોડી આપવાના લીધે મોક્ષયોજકશૈલેશીકરણસ્વરૂપ વ્યાપારવાળા છે. માટે જૈનદર્શનસંમત યોગલક્ષણને સ્વીકારવામાં આવે તો યોગશબ્દનો મુખ્યાર્થ અબાધિત હોવાથી સ્થાન વગેરે પાંચેયને ઉપચાર વિના જ યોગ કહી શકાય. આનો એકાગ્રતાપૂર્વક શાંતિથી વિચાર કરવો જરૂરી હોવાથી ઉપાધ્યાયજી મહારાજે 'ધ્યેય' પદનો પ્રયોગ કરેલ છે. [૧૩/૪]

ગ્રંથકારશ્રી પરાર્થકરણને જણાવે છે.

<u>ગાથાર્થ</u> - વિહિત અનુષ્ઠાનમાં પરાયણ તથા પરમાર્થથી યોગશુદ્ધિવાળા સાધુનું ભિક્ષાટન વગેરે સર્વ અનુષ્ઠાન પરાર્થકરણ જાણવું. [૧૩/૫]

## ❀ સાધુની સર્વક્રિયા પરાર્થકરણસ્વરૂપ ❀

<u>ટીકાર્થ</u> - શાસ્ત્રોક્ત જે અનુષ્ઠાન હોય તેમાં પરાયણ તથા પરમાર્થથી વિશુદ્ધ મન-વચન-કાયાની પ્રવૃત્તિવાળા સાધુની ભિક્ષાટન = આહારની ગવેષણા, વસ્ત્રૈષણા, પાત્રૈષણા વગેરે સર્વ અનુષ્ઠાન પરાર્થકરણ જાણવું, કારણ કે સાધુ દ્વારા ગ્રહણ

**यते** = साधो **परार्थकरण ज्ञेयम्,** यतिना गृह्यमाणस्याऽऽहार-वस्त्र-पात्रादे दातु पुण्यनिबन्धनत्वेन परोपकार-हेतुत्वात् विशुद्धयोगशक्तेश्चोचितप्रवृत्तिहेतुसामायिकशक्त्या 'तदर्थितानियतत्वादिति द्रष्टव्यम् ॥१३/५॥

**कल्याणकन्दली**

जहा- लाउयपाए वा, दारुपाए वा, मट्टियापाए वा <– [३/३/१७८] इत्युक्त. । पात्रग्रहण-वितरण-धारण-प्रत्यर्पण-परिकर्म-परिष्ठापनादिविधि-निषेधादिक विस्तरतो बुभुत्सुभि **आचाराङ्गद्वितीयश्रुतस्कन्धगतषष्ठाध्ययन-निशीथगतचतुर्दशोद्देशादिकमवलोक**-नीय गीतार्थगुरुसन्निधाने । **मनुस्मृतौ** तु –> अलाबु दारुपात्रश्च मृन्मय वैदल तथा । एतानि यतिपात्राणि मनु स्वायभुवोऽब्रवीत् ॥ <– (६/५४) इत्येव चतुर्विध पात्रमुक्तम् । 'वैदल = वशादिखण्डनिर्मित' इति तद्वृत्तौ । एतच्च जैनयतीनामुत्सर्गतो न कल्पते ।

**परोपकारहेतुत्वादिति** । तदुक्त **अष्टकप्रकरणे** –> वृद्धाद्यर्थमसङ्गस्य भ्रमरोपमयाऽटत' । **गृहिदेहोपकाराय** विहितेति शुभाशयात् ॥ <– [५/३] इति । –> गृहिणामारम्भपरिग्रहगृहीतात्मना दुर्गतिगमननिबन्धनकर्मबन्धवता धर्मसाधककायोपकारकाहार-ग्रहणद्वारेणाऽऽत्यन्तिकसुखफलनिर्वाणतरुबीजकल्पपुण्यसम्पादनत उपकार <– इति **अष्टकवृत्तिकारः** । अत एव **द्वात्रिंशिकाप्रकरणे श्रीसिद्धसेनदिवाकरेणापि** –> दोषेभ्य. प्रव्रजन्त्यार्या गृहादिभ्य पृथग्जना. । परानुग्रहनिम्नास्तु सन्तस्तदनुवृत्तयः ॥ <– [१७/१६] इत्युक्तम् । **समरादित्यकेवलिचरित्रे** मूलकारैरपि –> मोत्तूण झाणजोय मुणओ वि जणस्सऽणुग्गहट्ठाए । पिण्डगहणत्थमन्न जोयन्तरमो पवज्जन्ति ॥ <– [नवमभवे-पृ ८९६] इत्युक्तम् । अत एव तस्य भिक्षाऽपि शुक्लाहार उच्यते, शुद्धा-नुष्ठानसाध्यत्वात्, शुद्धानुष्ठानहेतुत्वात्, स्वरूपतः शुद्धत्वाच्च । इदमेवाभिप्रेत्य **योगशतके** –> साहारणो पुण विही सुक्काहारो इमस्स विण्णेओ । अण्णत्थओ य एसो उ सव्वसपक्करी भिक्खा ॥८१॥ <– इति । तदुक्त **धर्मविन्दौ** अपि –> धर्मायोपभोग इति <– [५/३९] । अय हि यति वीर्याचाराराधनार्थ भिक्षामटति न तु देहवर्णादिपोषणार्थम् । **न च** सामायिकपरिणामे सति कथ परोपकारगर्भा प्रवृत्ति , समत्वबाधादिति **शङ्कनीयम्, विशुद्धयोगशक्तेः उचितप्रवृत्तिहेतुसामायिकशक्त्या** = लोक-विरुद्धत्यागशासनापभ्राजनानिवृत्त्यनुकूलपरिणामानुविद्ध-चारित्रपरिणामनिर्वाहकोचितचारित्राचारादिसम्बन्धिसामायिकविवेकसामर्थ्येन **तदर्थितानियतत्वात्** = परोपकारार्थिताव्याप्तत्वात् । न हि परार्थकरण समभाव बाधते । परेषामपीदमभिमतम् । तदुक्त **लिङ्ग-पुराणे** –> आत्मप्रयोजनाभावे परानुग्रह एव हि । प्रयोजन समस्ताना क्रियाणा परमेष्ठिन. ॥ <– [९/४९] इति । **न च** सामायिकशक्तेरुचितप्रवृत्तिहेतुत्वसिद्धौ तत. परोपकारलक्षणोचितप्रवृत्ति स्यात्, तदेव तु कुत सिद्धमिति **शङ्कनीयम्,** सामायिकपरि-णामस्य निरभिष्वङ्गत्वात्तत्सिद्धे. । निरभिष्वङ्गे हि चित्ते सति प्राय उचितैव प्रवृत्तिर्जायते । तदुक्त **पञ्चाशकेऽपि** –> समभावो सामाईय तण-कचण-सत्तु-मित्तविसओ त्ति । निरभिस्सग चित्त उचियपवित्तिपहाण च ॥ <– [११/५] इति । अत सम-भावलक्षणसम्यग्दर्शननैर्मल्यवतो हि सत्प्रवृत्तिरुचितैव, तदुक्त **योगविन्दौ** –> अस्यौचित्यानुसारित्वात् प्रवृत्तिर्नासती भवेत् । सत्प्रवृत्तिश्च नियमाद् ध्रुव कर्मक्षयो यत ॥३४०॥ <– इति । न चैव सतीय महादुष्करा स्यादिति वाच्यम्, दुष्करत्वेऽपि भवस्वरूपविज्ञानादपवर्गानुरागात्तत्सौकर्यात्, तदुक्त **धर्मविन्दौ** –> भवस्वरूपविज्ञानात् तद्विरागाच्च तत्त्वत । अपवर्गानुरागाच्च

**કરાતા આહાર, વસ્ત્ર, પાત્ર વગેરે દાયકને પુણ્યબધનુ કારણ હોવાથી પરોપકારનો હેતુ છે અને ભિક્ષાટન વગેરે વિશુદ્ધ એવી મન-વચન-કાયાની પ્રવૃત્તિ એ ઉચિત પ્રવૃત્તિનો હેતુ બનનાર સામાયિક શક્તિ દ્વારા પરોપકારની અર્થિતાને નિયત = વ્યાપ્ત = વ્યાપ્ય છે - એ ખ્યાલમા રાખવુ [૧૩/૫]**

**વિશેષાર્થ** - સાધુ સયમયાત્રાના નિર્વાહ માટે અન્ન-પાણી-વસ્ત્ર-પાત્રને ગ્રહણ કરીને સયમયાત્રાને વધુ વેગવતી બનાવે છે તેથી તેમા આહારાદિ દ્વારા ટેકો આપનાર ગૃહસ્થને પુણ્ય બધાય છે, જે તેને દ્રવ્ય-ભાવ ઉભય રીતે હિતકારી બને છે ગૃહસ્થને સુખી અને ગુણવાન બનાવવાના લીધે ભિક્ષાદિ લેવા દ્વારા સાધુ તો ગૃહસ્થ ઉપર પરોપકાર કરે છે તેમ જ ભિક્ષાદિ ગ્રહણ કરનાર સાધુને ગૃહસ્થ ઉપર પરોપકાર કરવાનો ભાવ પણ અવશ્ય હોય છે, કારણ કે સાધુને ભિક્ષા ગ્રહણ કરવા માટે શાસ્ત્રમા ક્ષુધા-વૈયાવચ્ચ વગેરે ૬ કારણો બતાવેલ છે તે કારણો ઉપસ્થિત હોય ત્યારે આહારાદિગ્રહણ કરવાનુ સાધુને શાસ્ત્રવિધાન છે શાસ્ત્રમા બતાવેલ કારણોને લક્ષમા રાખી રસગારવ, ઋદ્ધિગારવ, શાતાગારવ, માયા, દેહાધ્યાસ વગેરે દોષોથી દૂર રહીને જિનાજ્ઞાપાલનના એકમાત્ર ઉદ્દેશથી જે મન-વચન-કાયાની પ્રવૃત્તિ થાય તે વિશુદ્ધ કહેવાય વળી, સાધુ ઉચિત રીતે ભિક્ષાગ્રહણાદિ કાર્ય કરે છે, અનુચિત રીતે નહિ દરરોજ નિષ્કારણ ફળ-મીઠાઈ, મિષ્ટાન્ન વગેરે વહોરવા, કડવા કટાક્ષ કે આકરા શબ્દનો પ્રહાર કરીને ગોચરી લેવી, એક જ જગ્યાએ બધી ગોચરી વહોરી લેવી, નજીકમા જ રોજ ગોચરી વહોરવી, દોષિત ગોચરી લેવી વગેરે અનુચિત પ્રવૃત્તિને છોડી ૪૨ દોષ રહિત ભિક્ષા દૂરના સ્થાનોમા અલગ-અલગ ઘરોમા મર્યાદાપૂર્વક, ગૃહસ્થના ભાવોલ્લાસ-સાધુબહુમાનાદિ વધે તે રીતે આહાર, પાણી, વસ્ત્ર વગેરે વહોરવા સ્વરૂપ ઉચિત પ્રવૃત્તિ સાધુ કરે છે તેમા કારણ છે સામાયિકની પરિણતિ- શક્તિ વિશુદ્ધ પ્રવૃત્તિ એ ઉપરોક્ત સામાયિક શક્તિ દ્વારા પરોપકારની ભાવનાને વ્યાપેલી છે - વ્યાપ્ત છે - વ્યાપ્ય

१ मुद्रितप्रतौ –> 'तदर्थिना नियत्वा ' इत्यशुद्ध पाठ ।

इतिकर्तव्यतामाह –> 'सर्वे'त्यादि ।

सर्वत्रानाकुलतायतिभावाऽव्ययपरा समासेन । कालादिग्रहणविधौ क्रियेतिकर्तव्यता भवति ॥१३/६॥

**सर्वत्र** = सर्वस्मिन् **कालादिग्रहणविधौ** = काल-स्वाध्यायादिग्रहणाचारे कालविभागप्रतिनियते, **क्रिया** = योगप्रवृत्तिः **समासेन** = सङ्क्षेपेण **इतिकर्तव्यता भवति** रात्रिन्दिवनियतक्रमशुद्धक्रियासन्तानस्येतिकर्तव्यतापदार्थत्वात् । कीदृशी सा ? –> अनाकुलतया = अत्वरया यतिभावस्य सामायिकरूपस्य अव्ययपरा = अव्ययगमनिष्ठा । बहुकालसाध्यक्रियाया त्वरया ह्यप्रमत्तत्वलक्षणो यतिभावो व्येतीत्येतद्विशेषणमुक्तम् ॥१३/६॥

कल्याणकन्दली

स्यादेतन्नान्यथा क्वचित् ॥ <– [७/३] इति । योगबिन्दौ अपि –> संसारादस्य निर्वेदस्तथोच्चैः पारमार्थिकः । सज्ज्ञानचक्षुषा सम्यक् तन्नैर्गुण्योपलब्धितः ॥ मुक्तौ दृढानुरागश्च तथा तद्गुणसिद्धितः । विपर्ययो महादुःखबीजनाशाच्च तत्त्वतः ॥ <– [३४१/३४२] इत्युक्तम् । पञ्चाशकेऽपि –> दुक्करय अह एय जइधम्मो दुक्करो चिय पसिद्ध । किं पुण ? एस पयत्तो मोक्खफलत्तेण एयस्स ॥ <– [११/४३] इति प्रोक्तमिति विभावनीयम् ॥१३/५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> सर्वत्र कालादिग्रहणविधौ अनाकुलतायतिभावाव्ययपरा क्रिया समासेन इतिकर्तव्यता भवति ॥१३/६॥ काल-स्वाध्यायादिग्रहणाचारे इति । कालग्रहणस्वरूपं ओघनिर्युक्तेरवसेयम्, स्वाध्यायादिग्रहणविधिस्तु प्रागुक्त [२/९-पृ ४८+१०/६-पृ २७८] एव । –> विधिना स्वाध्याययोग <– [७/६०] इति धर्मबिन्दुसूत्रमप्यत्र स्मर्तव्यम् । तद्विधिभङ्गे तु गृह्यमाणं श्रुतमप्यपकारकं भवति, तदुक्तं पञ्चवस्तुके –> एसो य सया विहिणा कायव्वो होइ अप्पमत्तेण । इहरा उ एअकरणे भणिया उम्मायमाईआ ॥५६७॥ उम्मायं व लभिज्जा रोगायकं व पाउणे दीहं । केवलिपन्नत्ताओ धम्माओ वा वि भसिज्जा ॥५६८॥ <– इति । रात्रिन्दिवनियत-क्रमशुद्धक्रियासन्तानस्य इतिकर्तव्यतापदार्थत्वात् । इत्थं भावसाधुत्वाविर्भावात्, परिशुद्धैश्चैव प्रतिदिननियतक्रियादिभिरेव मुक्तिसम्भवात्, तदुक्तं पञ्चवस्तुके –> तम्हा जे इह सत्थे साहुगुणा तेहि होई सो साहू । अच्चंतसुपरिसुद्धेहि मोक्खसिद्धित्ति काऊण ॥१००४॥ <– इति । **अनाकुलतया** = **अत्वरया** = असम्भ्रान्ततया = सम्यगुपयुक्ततया । तदुक्तं दशवैकालिकवृत्तौ पञ्चवस्तुकवृत्तौ च ग्रन्थकृद्भिरेव –> असम्भ्रान्तः = अनाकुल <– [द वै ५/१/१ गा वृ प व गा ११०९ वृ ] इति । योगशतके अपि –> सव्वत्थ पयत्तेण पसंताए <– [३४] इत्युक्तम् । एते च पञ्च साधूना स्वधर्मा ज्ञेया । –> 'वयछक्कमिंदियाणं च निग्गहो'' भावकरणसच्चं'' च । ''खमया विरागया'' वि य मणमाईण निरोहो'' य ॥ कायाण छक्क'' जोगाण जुत्तया'' वेयणाऽहियासणया'' । तह ''मारणंतियऽहियासणा य एए अणगारगुणा ॥ <– [आ नि प्रति २७] इत्येवं भद्रबाहुस्वामिभि आवश्यकनिर्युक्तौ दर्शिता सप्तविंशतिर्यतिगुणा इव यतीना स्वधर्मा परेषामभिमता । तदुक्तं नारदपरिव्राजकोपनिषदि –> 'अहिंसा 'सत्यमस्तेय' -ब्रह्मचर्य' -परिग्रह' ।

છે માટે સાધુની વિશુદ્ધિયુક્ત મન-વચન-કાયાની પ્રવૃત્તિ એ સાધુમા રહેલ પરોપકારની ભાવનાને સૂચવે છે માટે સાધુના સર્વ અનુષ્ઠાન પરાર્થકરણસ્વરૂપ જ છે - એ સિદ્ધ થાય છે [૧૩/૫]

ગ્રથકારશ્રી ઈતિકર્તવ્યતાને જણાવે છે

**ગાથાર્થ** :- કાલગ્રહણ વગેરે સર્વ આચારમા અનાકુળતાથી યતિભાવને અખડિત રાખવામા ઉદ્યત એવી પ્રવૃત્તિ એ સક્ષેપથી ઈતિકર્તવ્યતા થાય છે [૧૩/૬]

## સાધુની ઈતિકર્તવ્યતાને ઓળખીએ

**ટીકાર્થ** :- કાલવિભાગમા = યોગ્ય કાળમા પ્રતિનિયત એવા કાલગ્રહણ, સ્વાધ્યાયપ્રસ્થાપન વગેરે સર્વ આચારમા મન-વચન-કાયાની પ્રવૃત્તિ એ સક્ષેપથી ઈતિકર્તવ્યતા થાય છે, કારણ કે રાત-દિવસમા નિયમિત-પ્રતિબદ્ધ અને ક્રમથી શુદ્ધ એવી ક્રિયાઓનો સમુદાય એ ઈતિકર્તવ્યતાપદનો અર્થ છે તે પ્રવૃત્તિ અનાકુળતાથી સામાયિકાત્મક યતિભાવને અખડિત રાખવામા ઉદ્યત હોવી જોઈએ, કારણ કે દીર્ઘકાળે પૂર્ણ થનારી ક્રિયામા ઉતાવળ કરવાથી અપ્રમત્તતાસ્વરૂપ યતિભાવ ખડિત થાય છે. માટે કાયિક-માનસિક-વાચિક પ્રવૃત્તિનુ 'અનાકુલતાયતિભાવાવ્યયપરા' એવુ વિશેષણ શ્રીમદ્જીએ કહેલ છે [૧૩/૬]

**વિશેષાર્થ** :- 'ઇતિ' = એ પ્રમાણે 'કર્તવ્ય' = ક્રમ કર્તવ્ય-ફરજ, એમા ઊંચા-નીચા અસ્થિર નહિ થવાનુ નહિતર યતિભાવ = સાધુપણુ = સામાયિક = સમતા = અપ્રમત્તતા ચવાય કાલગ્રહણ, સ્વાધ્યાપ્રસ્થાપન [સજ્ઝાય પઠવવાની ક્રિયા] વગેરે કાર્ય પૂર્ણ થવામા ઘણો સમય લાગે તેમા ઉતાવળ-અસ્થિરતા, અનુપયોગ-ચચળતા વગેરે થવાનો સભવ રહે તેવુ ન થાય તે માટે શ્રીમદ્જીએ જણાવ્યુ કે કાલગ્રહણ વગેરે સર્વ આચારમા આકુળતા-વ્યાકુળતા છોડીને અપ્રમત્તતા અખડિત રહે તેવી સાવધાની વાળી પ્રવૃત્તિ કરવી તે ઈતિકર્તવ્યતા છે ગુરુવિનયાદિ દ્વારા ચિત્તની શુદ્ધિ પ્રાપ્ત થાય છે તથા ઈતિકર્તવ્યતાદ્વારા ચિત્તની એકાગ્રતા

उक्ता साधुसच्चेष्टा । अथ तद्वतो मैत्र्यादिसिद्धिमाह —> 'इति'इत्यादि ।

**इति चेष्टावत उच्चैर्विशुद्धयोगस्य¹ सद्यतेः क्षिप्रम् । मैत्री-करुणा-मुदितोपेक्षाः किल सिद्धिमुपयान्ति ॥१३/७॥**

**इति** = उक्तप्रकारेण **चेष्टावत** = प्रवृत्तिमत **उच्चै** = अत्यर्थ **विशुद्धयोगस्य** = विशुद्धभावस्य **सद्यते** = अप्रमत्तसाधो **क्षिप्र** = अचिरेणैव **मैत्री-करुणा-मुदितोपेक्षा** पूर्वोक्ता चतस्रो भावना **सिद्धिमुपयान्ति** = सिद्धत्वाख्य विशेष लभन्ते **किल** इति आप्तागमवाद ॥१३/७॥ एतद्गतमेव विशेषमाह —> **'एता'** इत्यादि ।

**एताश्चतुर्विधाः खलु भवन्ति सामान्यतश्चतस्रोऽपि । एतद्भावपरिणतावन्ते मुक्तिर्न तत्रैताः ॥१३/८॥**

**एता** = मैत्र्याद्या **चतुर्विधा** = चतुर्भेदा, **खलु** वाक्यालङ्कारे, **भवन्ति सामान्यत** = सामान्येन **चतस्रोऽपि** प्रस्तुता एतासा भावपरिणतौ = विशिष्टस्वरूपलाभे **अन्ते** = सर्वोत्कर्षे सति **मुक्ति** = निर्वृत्ति भवति। **तत्र** =

**कल्याणकन्दली**

⁶अनौद्धत्यमदीनत्व⁷ ⁸प्रसाद ⁹स्थैर्यमार्जवम्¹⁰ ॥ ¹¹अस्नेहो ¹²गुरुशुश्रूषा ¹³श्रद्धा ¹⁴क्षान्तिर्दम ¹⁵ शम ¹⁶ । ¹⁷उपेक्षा ¹⁸धैर्य-माधुर्ये¹⁹ ²⁰तितिक्षा ²¹करुणा तथा ॥ ²²ह्रीस्तथा ²³ज्ञान²⁴विज्ञाने ²⁵योगो ²⁶लघ्वशन ²⁷धृति । एष स्वधर्मो विख्यातो यतीना नियतात्मनाम् ॥ <— [४/१०-१२] इति ॥१३/६॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> इति चेष्टावतः उच्चै. विशुद्धयोगस्य सद्यते मैत्री-करुणामुदितोपेक्षाः क्षिप्र सिद्धि उपयान्ति किल ॥१३/७॥ ननु यतिभावे सर्वत्राऽप्रतिबद्धतैवाऽऽवश्यकी । ततश्च मैत्र्यादीना कथ तत्रोपयोग इति चेत् ? नैवम्, क्षयोपशमविशेषाधानद्वारा तासा यतिभावदार्ढ्यायोपयोगात् । इदमेवाभिप्रेत्य **पञ्चाशके** —> सव्वत्थ अपडिबद्धा मेत्तादिगुणण्णिया य णियमेण । सत्ताइसु होति दढ इय आययमग्गतल्लिच्छा ॥ <— [११/४२] इत्युक्तम् । योगदीपिका तु स्पष्टैव ॥१३/७॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> सामान्यत एता चतस्रोऽपि खलु चतुर्विधा भवन्ति । एतद्भावपरिणतौ अन्ते मुक्ति । तत्र एताः न ॥१३/८॥

**एतासा** = मैत्र्यादिभावनाना **विशिष्टस्वरूपलाभे सर्वोत्कर्षे सति निर्वृत्ति¹ भवति** । इदमेवाभिप्रेत्य **अध्यात्मगीताया** —> चतस्रो भावना भाव्या. सर्वकर्मविनाशिका <— [३२०] इत्युक्तम् । युक्तश्चैतद्, यत ताभ्य एव रागादिमलस्य मण्डूकभस्मन्यायेन नाशात्, क्रियादिकृतस्य रागादिविगमस्य मण्डूकचूर्णन्यायेन सोपप्लवत्वात् । तदुक्त **योगशतके** —> कायकिरियाए दोसा, खविया मडुक्कचुण्णतुल्ल त्ति । ते चेव भावणाए नेया तच्छारसरिस त्ति ॥८६॥ मैत्र्यादिभावोपेत एव धर्मो भवति, तदुक्त **धर्मबिन्दौ** —> वचनाद्यदनुष्ठानमविरुद्धाद्यथोदितम् । मैत्र्यादिभावसयुक्त तद्धर्म इति कीर्त्यते ॥[१/३]<— इति । इदमेवाऽभिप्रेत्य **धर्मसङ्ग्रहे श्रीमानविजयवाचकेनाऽपि** —> वचनादविरुद्धाद्यदनुष्ठान यथोदितम् । मैत्र्यादिभावसमिश्र तद्धर्म इति कीर्त्यते

પ્રાપ્ત થાય છે મનશુદ્ધિ + મનસ્થિરતા = ઉત્કૃષ્ટ યોગસિદ્ધિ [૧૩/૬]

સાધુની પચવિધ સુદર ચેષ્ટા જણાવી હવે ગ્રથકારશ્રી પચવિધ સુદર ચેષ્ટાવાળા સાધુને મૈત્રી વગેરેની સિદ્ધિ જણાવે છે

**ગાથાર્થ** - આ પ્રમાણે પચવિધ ચેષ્ટાવાળા અત્યત વિશુદ્ધ ભાવવાળા અપ્રમત્ત સાધુને મૈત્રી, કરુણા, મુદિતા અને ઉપેક્ષા ઝડપથી સિદ્ધ થાય છે -એમ આપ્તાગમવાદ છે [૧૩/૭]

**ટીકાર્થ** - ઉપરોક્ત પ્રકારે પચવિધ પ્રવૃત્તિવાળા તેમ જ અત્યત વિશુદ્ધ ભાવવાળા અપ્રમત્ત સાધુને ટૂકા સમયમા જ પૂર્વોક્ત [૪/૧૫] મૈત્રી, કરુણા, મુદિતા અને ઉપેક્ષા આ ચાર ભાવના સિદ્ધિને પામે છે અર્થાત્ તે જ ભાવનાઓ સિદ્ધત્વ નામના વિશેષ ધર્મને પામે છે - આવી આપ્ત પુરુષોની આગમવાણી છે [૧૩/૭]

ગ્રથકારશ્રી મૈત્રીઆદિ ભાવનામા રહેલ વિશેષ ધર્મને જણાવે છે

**ગાથાર્થ** .- સામાન્યથી આ ચારેય ભાવના ચાર પ્રકારની થાય છે આ ભાવનાઓનુ હાર્દ પરિણમે છતે અતે મોક્ષ થાય છે મોક્ષમા આ મૈત્રી વગેરે ભાવનાઓ હોતી નથી [૧૩/૮]

## મોક્ષમાં મૈત્રી આદિ ભાવનાઓ નથી

**ટીકાર્થ** .- મૂળ ગાથામા 'खलु' શબ્દ વાક્યની શોભા માટે છે સામાન્યથી પ્રસ્તુત આ મૈત્રી વગેરે ચારેય ભાવનાઓ ચાર પ્રકારની થાય છે [અર્થાત્ મૈત્રી વગેરે ચારેય ભાવનાના પ્રત્યેકના ચાર ચાર ભેદ છે તેથી કુલ ૪ x ૪ = ૧૬ ભેદ થાય આગળની ગાથામા ૧૬ ભેદનુ નિરૂપણ કરવામા આવશે ] આ ભાવનાઓનુ હાર્દ પરિણમે ત્યારે અર્થાત્ આ ભાવનાઓના વિશિષ્ટ સ્વરૂપનો લાભ થાય ત્યારે અતે આ ભાવનાઓ સર્વોત્કૃષ્ટ થતા મોક્ષ થાય છે મોક્ષમા આ મૈત્રી વગેરે ભાવનાઓ સભવતી નથી, કારણ કે મુક્તિ સાસારિક ભાવોથી પર છે [૧૩/૮]

१ मुद्रितप्रतौ 'विशुद्धभावस्य' इति पाठ । ह प्रत्यनुसारेणाऽस्माभि पाठो गृहीत ।

मुक्तौ एता = मैत्र्याद्या न सम्भवन्ति, मुक्ते सासारिकभावोत्तीर्णरूपत्वात् ॥१३/८॥

उक्तमेव प्रत्येक चातुर्विध्य विवृण्वन्नाह -> उपकारी'त्यादि ।

उपकारि-स्वजनेतरसामान्यगता चतुर्विधा मैत्री । मोहाऽसुखसंवेगान्यहितयुता चैव करुणेति ॥१३/९॥

उपकारी च स्वजनश्चेतरश्च सामान्यश्च एतद्गता चतुर्विधा = चतुर्भेदा मैत्री भवति । तत्रोपकर्तुं शीलमस्येत्युपकारी, तत्कृतमुपकारमपेक्ष्य या मैत्री लोके प्रसिद्धा सा प्रथमा । स्वकीयो जनो नालप्रतिवद्धादि तस्मिन्नुपकारमनपेक्ष्यापि स्वजनवुद्धयैव या मैत्री सा द्वितीया । इतर उपकारि-स्वजनभिन्न परिचितो गृह्यते, सामान्यस्य पृथग्ग्रहणात् । तत्र = पूर्वपुरुषप्रतिपन्नसम्वन्धे स्वप्रतिपन्नसम्वन्धे वोक्तनिमित्तद्वयनिरपेक्षा या मैत्री सा तृतीया ।

कल्याणकन्दली

॥३॥<- इत्युक्तम् । मुक्ते' सासारिकभावोत्तीर्णरूपत्वात् = औदयिक-क्षायोपशमिकादिभावातिक्रान्तस्वरूपत्वात् ॥१३/८॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> उपकारि-स्वजनेतरसामान्यगता चतुर्विधा मैत्री, मोहाऽसुख-सवेगान्यहितयुता चैव करुणा ॥१३/९॥ इय कारिका योगसूत्रटिप्पण-योगभेदद्वात्रिशिकावृत्त्यादो [यो सू १/३३ द्वा द्वा १८/३-४] समुद्धृता टीकाकृता ।

स्वकीयो जनो नालप्रतिवद्धादिः = वल्लीप्रतिवद्धादि । वल्ली च द्विधा, अनन्तरा परम्परा च । अनन्तरा इमे षड्जना -> माता, पिता, भ्राता, भगिनी, पुत्रो दुहिता च । तदुक्त व्यवहारसूत्रभाष्ये -> वल्ली सतरणतर, अणतरा छज्जणा इमे हुति । माया पिया य भाया भगिणी पुत्तो य धूया य ॥ <- [उद्दे ४ गा ५३२] इति । सान्तरा पुनरिय [अ] मातु. 'माता पिता', भ्राता', भगिनी' च । तथा [व] पितु 'माता, [२]पिता, [३]भ्राता, [४]भगिनी च । तथा [क] भ्रातु अपत्य 'भ्रात्रीयो भ्रात्रीया[२] वा । [ड] भगिन्या वा अपत्य 'भागिनेयो भागिनेयी[२] वा । दोहित्रो दौहित्री पोत्र पौत्री च । तदुक्त -> माउम्माया य पिया भाया भगिणी ण्य, ण्व पिउणोऽवि । भाउ भगिणीण वच्चा धूया-पुत्ताण वि तहेव ॥[ ] इति ।

पूर्वपुरुषप्रतिपन्नसम्वन्धे = स्वपितृ-पितामह-कुलवृद्धादिपूर्वपुरुषाश्रिते स्वप्रतिपन्नसम्वन्धे वा उक्तनिमित्तद्वयनिरपेक्षा = उपकारि-स्वजनत्वनिमित्तानपेक्षा या मैत्री = हितवुद्धि सा तृतीया । एतदनुसारेण योगभेदद्वात्रिशिकाया -> सुखचिन्ता मता मैत्री सा क्रमेण चतुर्विधा । उपकारि-स्वकीय-स्वप्रतिपन्नाऽखिलाश्रया ॥ <- [द्वा द्वा १८/३] इत्युक्तम् ।

**विशेषार्थ** :- मैत्री वगेरे भावनाओ प्राथमिक अवस्थामा औदयिकभावस्वरूप छे तथा ते उत्तर अवस्थामा क्षायोपशमिक भावस्वरूप बने छे मैत्री वगेरे भावनाओ अध्यात्ममार्गे आगळ वधता-वधता विशुद्ध -प्रकृष्ट क्षायोपशमिकभावस्वरूप थता मोक्ष मळे छे मोक्षमा आत्माना औदयिक के क्षायोपशमिक गुणो होता नथी मोक्षमा बधा ज आत्मगुणो क्षायिकभावस्वरूप होय छे ससारकालीन क्षायोपशमिक एवा क्षमा, नम्रता वगेरे गुणो मोक्षमा क्षायिकभाव स्वरूपे परिणमे छे क्षमा वगेरेनी जेम मैत्री वगेरे क्षायिक भावमा परिणमे तो ते पण मोक्षमा होय परतु परहितचिंतास्वरूप मैत्री वगेरे भावनाओ क्षायिक भावमा परिणमती नथी कारण के ते चित्तवृत्तिस्वरूप छे सर्वज्ञ भगवतोने चित्त ज होतु नथी चित्तस्वरूप माध्यम विना ज तेओ साक्षात् आत्माथी ज सर्व द्रव्य-गुण-पर्यायनो साक्षात्कार करे छे माटे चित्तवृत्तिस्वरूप मैत्री वगेरे भावो मोक्षमा सभवित नथी परतु क्षमा वगेरे क्षायिक आत्मगुणोमा अतर्गतस्वरूपे अथवा ते क्षायिक गुणोना अवान्तर प्रकार स्वरूपे अथवा मोहक्षोभरहित शुद्धचैतन्यमय निर्विकल्पकस्वरूपे मोक्षमा पण ते मानी शकाय छे एवु विचार करता जणाय छे [१३/८]

आठमी गाथामा जणावेल मैत्री वगेरे प्रत्येक भावनाना चार भेदनु विवरण करता ग्रथकारश्री जणावे छे के —

**गाथार्थ** :- [१]उपकारी, [२]स्वजन, [३]अन्यजन तथा [४]सामान्यजन विषयक मैत्री चार प्रकारनी छे अने [१]मोह, [२]सुखाभाव, [३]सवेग तथा [४]अन्यहितथी युक्त करुणा चार प्रकारनी छे [१३/९]

## ❖ मैत्रीना चार भेद ❖

**टीकार्थ** - उपकारी, स्वजन, अन्यजन अने सामान्यजन - आ चार सबधी मैत्री चार प्रकारनी होय छे एमा [१] उपकार करवानो जेनो स्वभाव छे एवा उपकारीए करेला उपकारनी अपेक्षाए जे मैत्री=मित्रभाव लोकमा प्रसिद्ध होय ते प्रथम मैत्री जाणवी [२] उपकारनी अपेक्षा राख्या विना पण सगावहालानी बुद्धिथी ज नालप्रतिबद्ध [पेटनी दुटीमा जे मातानी नाळ होय छे ते जेनी समान होय अर्थात् एक ज मातानी कुखे जन्मेल एवा काका, फई, मामा-मासी तथा तेनो जे व्यक्ति साथे परपरासबध छे ते भत्रीजा-भत्रीजी, भाणिया-भाणेजी वगेरे] पोताना सगावहाला उपर जे मित्रभाव होय ते बीजी मैत्री जाणवी [३] गाथामा रहेल ईतर शब्द द्वारा उपकारी अने सगा स्वजनथी भिन्न एवो परिचित माणस लेवो, [सर्व सामान्य नहि अर्थात् परिचित-अपरिचित बधा नहि] कारण के मूळकारश्रीए चोथा भेदमा सामान्यनो स्वतत्र उल्लेख

सामान्ये सर्वस्मिन्नेव जने परिचिताऽपरिचितसाधारण्येनोक्तनिमित्तत्रयनिरपेक्षा या मैत्री सा **चतुर्थी** ।

मोहश्चासुखश्च सवेगश्चान्यहितश्च तै युता **चैव करुणा** भवति । मोह = अज्ञान, तेन युता ग्लानयाचिताऽपथ्यवस्तुप्रदानाभिलाषसदृशी **प्रथमा** । असुख = सुखाभाव, स यस्मिन् प्राणिन्यस्ति तस्मिन् या लोकसिद्धाहारवस्त्र[1]शयनाऽऽसनादिप्रदानलक्षणा सा **द्वितीया** । सवेग = मोक्षाभिलाष, तेन सुखितेष्वपि सत्त्वेषु सासारिकदु खत्याजनेच्छया छद्मस्थाना स्वभावत प्रीतिमत्तया प्रवर्त्तते सा **तृतीया** । या त्वन्यहितेन = प्रीतिमत्तासम्बन्धविकलसर्वसत्त्वहितेन केवलिनामिव भगवता महामुनीना सर्वानुग्रहपरा अनुकम्पा सा **चतुर्थी** ॥१३/९॥

**'सुखमात्र'** इत्यादि ।

**सुखमात्रे सद्धेतावनुबन्धयुते परे च मुदिता तु । करुणाऽनुबन्ध-निर्वेद-तत्त्वसारा ह्युपेक्षेति ॥१३/१०॥**

कल्याणकन्दली

**तेन = मोहेन युता ग्लानयाचिताऽपथ्यवस्तुप्रदानाभिलाषसदृशी प्रथमा** करुणा ज्ञेया । उपलक्षणात् –> मय्येव निपतत्वेतज्जगद्दुश्चरित तथा । मत्सुचरितयोगाच्च मुक्ति· स्यात् सर्वदेहिनाम् ॥ <– [ ] इति मायापुत्रीयकल्पिताऽपि करुणा प्रथमभेदेऽवगन्तव्या, मोहोपेतत्वात् । तदुक्त **अष्टकप्रकरणे** –> तदेव चिन्तन न्यायात्तत्त्वतो मोहसङ्गतम् <– [२९/६] । दु खितेषु चौरादिपु शास्त्रनिषिद्धशस्त्रादिदानेच्छाऽपि प्रकृताद्यकरुणायामवगन्तव्या । 'मा भूद् व्याधस्य दु.ख' इति बुद्धचा मृगादिमार्गमृतमावेदयतोऽपि मोहगर्भैव करुणा । 'मा भूद् दुर्भिक्षे पश्वादि दु खभाजन' इति करुणया पश्वादीन् व्यापादयतोऽपि प्रथमैव करुणा । दुःखमोचनबुद्धचा दु·खशतजर्जरकलेवरान् मनुष्यादीन् घ्नतोऽपीयमेव ज्ञेया, सद्भावानवगतत्वे सति परदु खप्रहाणेच्छावत्त्वादिति दिक् ।

**या तु प्रीतिमत्तासम्बन्धविकलसर्वसत्त्वहितेन** = प्रीतिमत्तासम्बन्धशून्येषु सर्वेषु एव सत्त्वेषु स्वभावादेव कल्याणेन **युता केवलिनामिव भगवता महामुनीना सर्वानुग्रहपरा अनुकम्पा सा चतुर्थी** करुणा ज्ञेया । मूलग्रन्थानुसारेण **योगभेदद्वात्रिंशिकाया** –> करुणा दु खहानेच्छा मोहाद् दु खितदर्शनात् । सवेगाच्च स्वभावाच्च प्रीतिमत्स्वपरेषु च ॥ <– [द्वा द्वा. १८/४] इत्युक्तम् ॥१३/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> मुदिता तु सुखमात्रे सद्धेतौ अनुबन्धयुते परे च । उपेक्षा हि करुणाऽनुबन्ध-निर्वेद-तत्त्वसारा इति॥१३/१०॥ इयमपि कारिका **योगसूत्रटिप्पण-योगभेदद्वात्रिंशिकावृत्त्यादौ** समुद्धृता [यो टि १/३३-द्वा द्वा.१८/

કરેલો છે પોતાના પૂર્વજોએ જેની સાથે સબધ રાખેલો હોય અથવા પોતે જેની સાથે સબધ-પરિચય-ઓળખાણ કરેલ હોય તે વ્યક્તિને વિશે પૂર્વોક્ત (૧) ઉપકારી કે (૨) સગા હોવાના કારણે જે મિત્રભાવ થાય તે બન્ને નિમિત્તથી નિરપેક્ષ એવો [ઓળખાણ હોવાના લીધે થતો] જે મિત્રભાવ તે ત્રીજી મૈત્રી જાણવી [૪] પરિચિત-અપરિચિત સાધારણરૂપે બધા જ લોકોમા ઉપકારી હોવાના લીધે કે સગા હોવાના કારણે કે પરિચિત હોવાના નિમિત્તે જે મિત્રભાવ થાય તેનાથી ભિન્ન એવો જે હિતચિતાસ્વરૂપ મિત્રભાવ તે ચોથી મૈત્રી જાણવી

## કરુણાના ચાર ભેદ જાણીએ

મોહ, અસુખ, સવેગ અને અન્ય હિતથી યુક્ત કરુણા ચાર પ્રકારની હોય છે [૧] મોહ = અજ્ઞાન અજ્ઞાનથી યુક્ત એવી કરુણા એ ગ્લાન વ્યક્તિએ માગેલ અપથ્ય વસ્તુને આપવાના અભિલાષ જેવી છે [કતલખાનુ શરૂ કરવા ઈચ્છતા ગરીબ કસાઈને આધુનિક યત્ર વસાવવા માટે જરૂરી આર્થિક સહાય કરવાની ઈચ્છા એ પણ મોહગર્ભિત કરુણા જાણવી ] [૨] જે પ્રાણી પાસે સુખ ન હોય તેને લોકપ્રસિદ્ધ આહાર, વસ્ત્ર, આસન વગેરે આપવા સ્વરૂપ બીજી કરુણા સુખાભાવગર્ભિન જાણવી [૩] મોક્ષાભિલાષાસ્વરૂપ સવેગના લીધે સાસારીક દુ ખથી છોડાવવાની ઈચ્છાથી સુખી એવા જીવોને વિશે પણ છદ્મસ્થ જીવોની સ્વાભાવિક રીતે સ્નેહસબધથી જે કરુણા પ્રવર્તે તે ત્રીજી કરુણા સવેગગર્ભિત જાણવી [૪] જેની સાથે સ્નેહનો વ્યવહાર ન હોય એવા પણ સર્વ જીવોના હિતથી, કેવલીની જેમ મહામુનિઓની સર્વ જીવોના અનુગ્રહમા તત્પર એવી ચોથી કરુણા હિતગર્ભિત જાણવી [૧૩/૯]

<u>**ગાથાર્થ**</u> - [1]સર્વ સુખને વિશે, [2]સુદર હેતુને વિશે, [3]સાનુબધ સુખને વિશે અને [4]ઉત્કૃષ્ટ સુખને વિશે મુદિતા ભાવના ચાર પ્રકારની જાણવી [1]કરુણાપ્રધાન, [2]અનુબધપ્રધાન, [3]નિર્વેદપ્રધાન અને [4]તત્ત્વપ્રધાન આમ ઉપેક્ષા ભાવના ચાર પ્રકારની જાણવી [૧૩/૧૦]

१ 'शयन' पद मुद्रितप्रतौ नास्ति ।

**सुखमात्रे** सामान्येनैव वैषयिकेऽपथ्याऽऽहारतृप्तिजनितपरिणामाऽसुन्दरसुखकल्पे स्वपरनिष्ठे **प्रथमा मुदिता**। सन् = परिणामसुन्दरसुखजननशक्तिमान् हेतु यस्य तादृशे हित-मिताहारपरिभोगजनितरसास्वाद-सुखकल्पे स्व-परगतैहिकसुखविशेषे **द्वितीया**। अनुबन्ध = देव-मनुजजन्मसु सुखपरम्पराऽविच्छेद तेन युते लोकद्वयसुखे आत्म-परापेक्षया **तृतीया**। पर = प्रकृष्ट मोहक्षयादिसम्भव यत्सुख तस्मिन् **चतुर्थी** मुदिता।

करुणा चानुबन्धश्च निर्वेदश्च तत्त्वञ्च एतानि सारो यस्या सा तथा **इति** = अमुना प्रकारेण चतुर्विधा **उपेक्षा**। करुणा = मोहयुतकरुणा तत्सारा उपेक्षा **प्रथमा**, यथा कश्चिदातुरस्य स्वातन्त्र्यादपथ्य सेवमानस्याऽहित जानानोऽपि तन्निवारणमवधीर्योपेक्षा करोति, मा भूदनुकम्पाभङ्ग इति। अनुबन्ध = फलसिद्ध्यन्त[१] कार्यविषय प्रवाहपरिणाम तत्सारा **द्वितीया**, यथा कश्चित् कुतश्चिदालस्यादेरर्थार्जनादौ न प्रवर्तते, तथाऽप्रवर्तमानमन्यदा तद्धितार्थी [२]प्रवर्तयति, विवक्षिते तु काले परिणामसुन्दरकार्यसन्तानमवेक्षमाणो माध्यस्थ्यमवलम्बत इति। निर्वेद = भववैराग्य, तत्सारा **तृतीया**, यथा चतसृषु गतिषु नानाविधदु खपरम्परामनुभवतो जीवस्य कथञ्चिन्मनुज-देवगतिषु सर्वेन्द्रियाह्लादक सुखविशेषमनुपश्यतोऽपि तदसारताकादाचित्कत्वाभ्या तस्मिन्नुपेक्षा। तत्त्व = वस्तुस्वभाव, तत्सारा **चतुर्थी** या मनोज्ञामनोज्ञाना वस्तूना परमार्थतो राग-द्वेषानुत्पादकत्वेन स्वापराधमेव मोहविकारसमुत्थ भावयत स्वरूप-

**कल्याणकन्दली**

८/६]।

**मोहयुतकरुणेति**। प्रथमकरुणाया मोहानुविद्धत्वेऽपि दानाद्यप्राधान्यात् करुणात्वम्। अत्र तूपेक्षाप्राधान्यात् उपेक्षायामवतार., उपधेयसाङ्कर्येऽप्युपाध्योरसाङ्कर्यादिति विभावनीयम्।

**परमार्थतो रागद्वेषानुत्पादकत्वेन** –> 'तानेवार्थान् द्विषत. तानेवार्थान् प्रलीयमानस्य। निश्चयतोऽस्यानिष्ट न विद्यते किञ्चिदिष्ट वा ॥५२॥ इति प्रशमरतिवचनादिना **स्वापराधमेव मोहविकारसमुत्थ भावयत**'। तदुक्त श्रीबुद्धिसागरसूरिभिरपि

## मुदिता भावनाना ४ भेदने ओळखीअे

<u>**टीकार्थ**</u> :- [१] कोई पण सुखने विशे सामान्यथी पोतानामा के बीजामा रहेल वैषयिक सुखने विशे, के जे अपथ्य आहारथी थयेल तृप्तिथी उत्पन्न थनार परिणामे खराब सुख जेवु छे, आनद थवो ते प्रथम मुदिता भावना जाणवी [पोतानी प्रकृतिने अनुकूळ न होय - नुकशानकारक होय तेवी कुपथ्य चीजने खावाथी थनार तृप्तिथी जे सुख उत्पन्न थाय छे ते परिणामे खराब होय छे तेम वैषयिक सुख भोगववामा मजा आवे पण ते परिणामे भयकर सजा छे छता पोताना के बीजाना वैषयिक सुखमा जे आनद थाय ते प्रथम मुदिता भावना जाणवी आ औदयिक भावस्वरूप छे] [२] जेनो हेतु परिणामे सुदर एवा सुखने उत्पन्न करवानी शक्तिवाळो होय तेवा पोताना के बीजाना आ लोकना विशेष प्रकारना सुखने विशे जे आनद थाय ते बीजी मुदिता भावना जाणवी एनो विषय बननार सुख विशेष ए हित-मित एवा आहारने वापरवाथी थनार स्वास्वादना सुख जेवु छे [कि जे परिणामे सुदर छे, शक्तिवर्धक छे, आरोग्यदायक छे, स्फूर्तिजनक छे जबुकुमार, शालिभद्र वगेरेनी समृद्धि जोईने आनद थाय तेनो बीजी मुदितामा समावेश थई शके-एवु जणाय छे] [३] देव-मनुष्यभवमा सुखनी परपरानो विच्छेद न थवो ते अनुबध कहेवाय पोतानी अने बीजानी अपेक्षाए आलोक अने परलोकना अनुबधयुक्त सुखने विशे जे आनद थाय ते त्रीजी मुदिता अनुबधप्रधान जाणवी [४] मोहनीय कर्मना क्षयथी उत्पन्न थनार प्रकृष्ट सुखने विशे जे आनद थाय [सिद्ध परमात्माना सुखने जाणीने आनद थाय] ते उत्कृष्टसुखप्रधान एवी चोथी मुदिता भावना जाणवी

## ❀ चार प्रकारनी उपेक्षाने समजीअे ❀

करुणा, अनुबध, निर्वेद अने तत्त्व जेनो सार छे ते रीते चार प्रकारनी उपेक्षा जाणवी [१] करुणाशब्दनो अर्थ छे मोहयुक्त करुणा ते जेनो सार होय तेवी उपेक्षा = करुणासार उपेक्षा जेम के स्वच्छदताथी अपथ्यने खानार रोगीना अहितने जाणवा छता तेने अटकाववानु माडी वाळीने 'अनुकपानो भग न थाय' एवी बुद्धिथी जे माणस तेनी उपेक्षा करे [२] अनुबध = फळनी सिद्धि सुधी रहे तेवो कार्यविषयक प्रवाहनो परिणाम आ अनुबध जेनो सार होय तेवी उपेक्षा = अनुबधसार उपेक्षा जेम के कोईक आळस वगेरेने लीधे कोई माणस धनोपार्जन वगेरेमा प्रवृत्ति न करे तो तेवा अप्रवर्तमानने तेनो हितेच्छु आम तो प्रवर्तावे पण [कालक्षेप करवाथी] परिणामे सारा कार्यनी परपराने जोतो कोईक समये मध्यस्थताने - उदासीनताने धारण करे आ अनुबधसार बीजी उपेक्षा जाणवी [३] ससारनो वैराग्य जेनो सार होय तेवी उपेक्षा निर्वेदसार कहेवाय जेम के नरकादि चारेय गतिमा अनेकविध दु खोनी परपराने अनुभवता जीवने मनुष्य-देव गतिमा सर्व ईन्द्रियोने खुश करे तेवु

१ मुद्रितप्रतौ 'फलसिद्धान्त' इत्यशुद्ध पाठ। २ ह प्रतौ अत्र 'न' पदप्रक्षेपो वर्तते। स चाशुद्ध प्रतिभाति।

व्यवस्थितवस्त्वपराधमपश्यतो बाह्यार्थेषु सुख-दु खहेतुतानाश्रयणान्माध्यस्थ्यमवलम्बमानस्य भवति ॥१३/१०॥

केषा पुनरेताश्चतस्र परिणमन्तीत्याह –> 'एता' इत्यादि ।

**एताः खल्वभ्यासात्क्रमेण वचनानुसारिणा पुंसाम् । सद्वृत्ताना सतत श्राद्धाना परिणमन्त्युचैः ॥१३/११॥**

**एता** = प्रागुक्ता **खलु** = पुन **अभ्यासात्** = पुन पुनरावृत्ते **क्रमेण** = आनुपूर्व्या **वचनानुसारिणा** = आगमपुरस्कारिणा **पुसा** = पुरुषाणा **सद्वृत्ताना** = सच्चरित्राणा **सतत** = अनवरत **श्राद्धाना** = श्रद्धायुक्ताना **परिणमन्ति** = आत्मसाद्भवन्ति **उच्चै** = अत्यर्थम् ॥१३/११॥

कल्याणकन्दली

**अध्यात्मगीताया** –> वैषयिकपदार्थेषु सुख दुख न वस्तुत. । तत्र मिथ्यात्वबोधेन मोही भवति मानवः ॥२४॥ <– इति । विषयाणा सुख-दु.खाऽहेतुता तु परेषामपीष्टैव । तदुक्त **विष्णुपुराणे** –> वस्त्वेकमेव दुःखाय सुखायेर्ष्योद्भवाय च । कोपाय च यतस्तस्माद् वस्तु दुःखात्मक कुतः ? ॥ तदेव प्रीतये भूत्वा पुनर्दु.खाय जायते । तदेव कोपाय ततः प्रमादाय च जायते ॥ तस्माद् दु.खात्मक नास्ति न च किञ्चित् सुखात्मकम् । मनसः परिणामोऽय सुख-दुःखादिलक्षणः ॥ <– [२/६/४५-४६-४७] इति । शिष्ट स्पष्टम् । चतुर्विधा अपि मैत्र्यादिभावना यथोत्तर विशिष्ट-विशिष्टतरविवेकजन्या· । एतत्कारिकानुसारेण **योगभेदद्वात्रिंशिकाया** –> आपातरम्ये सद्वेतावनुबन्धयुते परे । सन्तुष्टिर्मुदिता नाम सर्वेषा प्राणिना सुखे ॥५॥ करुणातोऽनुबन्धाच्च निर्वेदात्तत्त्वचिन्तनात् । उपेक्षा ह्यहिते काले सुखेऽसारे च सर्वतः ॥६॥ <– इत्युक्तम् ॥१३/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> एता· खलु क्रमेण अभ्यासात् वचनानुसारिणा सद्वृत्ताना सतत श्राद्धाना पुसा उच्चैः परिणमन्ति ॥१३/११॥ इय कारिका **लोकविंशिकावृत्ति-योगभेदद्वात्रिंशिकावृत्ति-योगसूत्रटिप्पणादौ** समुद्धृता [लो.वि गो ७ यो.भे.९८/७ यो टि १/३३] । **श्रद्धायुक्ताना** उपलक्षणात् सवेगोपेतानाञ्च, तेषामपि आसन्नसमाधिलाभादेः परेषामपि सम्मतत्वात्, तदुक्त **योगसूत्रे** –> तीव्रसवेगानामासन्न. <– [१/२१] । **आत्मसात् भवन्ति** = फलोपधायिका भवन्ति, फलञ्चैतासा यथाक्रम सुखीर्ष्या-दुःखितोपेक्षा-पुण्यद्वेषाऽपुण्यतिरस्कारपरित्याग । तदुक्त **योगभेदद्वात्रिंशिकाया** –> सुखीर्ष्यां दु खितोपेक्षा पुण्य-द्वेषमधर्मिषु । राग-द्वेषौ त्यजन्नेता लब्ध्वाऽध्यात्म समाश्रयेत् ॥ <– [द्वा द्वा.१८/७] इति । **वाचस्पतिमिश्रोऽपि तत्त्ववैशारद्या** –> सुखितेषु मैत्री = सौहार्द भावयत. इर्ष्याकालुष्य निवर्तते चित्तस्य । दुःखितेषु च करुणा आत्मनीव परस्मिन् दु.खप्रहाणेच्छा भावयतः परापकारचिकीर्षाकालुष्य चेतसो निवर्तते । पुण्यशीलेषु प्राणिषु मुदिता = हर्ष भावयतोऽसूयाकालुष्य चेतसो निवर्तते । अपुण्यशीलेषु चोपेक्षा = माध्यस्थ्य भावयतोऽमर्षकालुष्य चेतसो निवर्तते । ततश्चास्य राजसतामसधर्मनिवृत्तौ शुक्लो धर्म उपजायते <– [यो.सू १/३३ त.वै.पृ ९८] इत्याह । प्रागुक्त [१२/१४] ध्यानसिद्ध्यै मैत्र्यादीनामावश्यकता प्रसिद्धैव । तदुक्त **न्यायविजयेन अध्यात्मतत्त्वालोके** –> ध्यानस्य सिद्ध्यै दृढभावनानामावश्यकत्व विबुधा वदन्ति । मैत्री प्रमोद करुणामुपेक्षा युञ्जीत तद् ध्यानमुपस्करोति ॥ <– [६/१४] इति । मैत्र्यादिविरहे तु धर्मप्राप्तिर्दुर्लभा । तदुक्त **योगसारे** –> धर्मकल्पद्रुमस्यैता मूल मैत्र्यादिभावना. । यैर्न ज्ञाता न चाभ्यस्ता. स तेषामतिदुर्लभ ॥ <– [२/७] इति । प्रागुक्त-

थोडु-घणु सुख छे - एवु जोवा छता तेनी असारता अने क्षणिकताने लीधे तेनी उपेक्षा करवी-आ निर्वेदसार उञ्जी उपेक्षा जाणवी [४] वस्तुनो स्वभाव जेनो सार-निष्कर्ष होय ते उपेक्षा तत्त्वसार जाणवी जेम के सारी के खराब वस्तु वास्तवमा राग-द्वेषनु कारण नथी, परतु पोतानु मोहनीय कर्म तेनु कारण छे मोहनीय कर्मनी विकृतिथी उत्पन्न थयेल पोताना अपराधनी विचारणा करतो जीव पोताना [= वस्तुना] स्वभावमा व्यवस्थित एवी बाह्य वस्तुना अपराधने जोतो नथी तेवु न जोवाथी बाह्य पदार्थमा सुखकारणतानो के दु खकारणतानो ते आश्रय नथी करतो आम बाह्य पदार्थने सुख-दु खकारण न मानवाथी मध्यस्थताने धारण करता जीवनी उपेक्षा तत्त्वसार जाणवी [१३/१०]

केवा जीवोने आ मैत्री वगेरे चार भावनाओ परिणमे छे ? आनो जवाब जणावता मूलकारश्री कहे छे के —

**गाथार्थ** :- आ भावनाओ कमश अभ्यास करवाथी आगमने अनुसरनारा, सुदर चारित्रवाळा अने सतत श्रद्धावाळा पुरुषोने अत्यत परिणमे छे [१३/११]

## ❀ मैत्री वगेरे भावना कोने परिणमे ? ❀

**टीकार्थ** :- [सर्वत्र कार्यमा] आगमने आगळ करनारा, सुदर चारित्रवाळा [illegible] श्रद्धावाळा एवा पुरुषोने - जीवोने पूर्वोक्त मैत्री वगेरे चार भावनाओ वारवार पुनरावर्तन = अभ्यास करवाथी [illegible] त् थाय छे. [१३/११]

आ बधु योगनो आरभ करनार अने जेणे योगारभ करी दीधेल छे तेवा योगा [illegible] ने आश्रयीने कह्यु निष्पन्नयोग ।

एतच्च योगारम्भकारब्धयोगान् प्रत्युक्तम् ।

निष्पन्नयोगाना तु चित्त कीदृशम् ? इत्याह —> 'एतदि'त्यादि ।

**एतद्रहित तु तथा तत्त्वाभ्यासात्परार्थकार्येव । सद्बोधमात्रमेव हि चित्त निष्पन्नयोगानाम् ॥१३/१२॥**

**एतद्रहित तु** = निर्विकल्पसस्कारेण मैत्र्यादिभावनानाशात् तद्रहितमेव **तथा** = तेन प्रकारेण इतराऽसम्भविना **तत्त्वाभ्यासात्** = परमार्थाभ्यासात् प्रकृष्टभावनाजनित-तद्विप्रमुक्त-तत्त्व'ज्ञानाऽऽहितसस्कारादित्यर्थ । **परार्थकार्येव** = परोपकारैकशीलमेव । सद्बोध = निर्मलज्ञान तन्मात्रमेव **हि चित्त निष्पन्नयोगानाम्** । तल्लक्षणश्चेद

**कल्याणकन्दली**

क्षान्त्यादिकमपि मैत्र्याद्यभ्यासलब्धसमता विना नोपपद्यते तत्त्वत. । तदुक्त **योगसार** एव —> क्षान्त्यादिर्दशधा धर्मः सर्वधर्मशिरोमणि. । सोऽपि साम्यवतामेव मैत्र्यादिकृतकर्मणाम् ॥ <— [२/३७] इति ॥१३/११॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> निष्पन्नयोगाना चित्त तु एतद्रहित तत्त्वाभ्यासात्परार्थकारि एव सद्बोधमात्रमेव ॥१३/१२॥

**निर्विकल्पसस्कारेण** = ज्ञातृ-ज्ञेय-ज्ञानविकल्पानवभासपूर्विल-स्वप्रकाशबोधाभ्यासेन **मैत्र्यादिभावनानाशात् तद्रहितमेव** = मैत्र्यादिरहितमेव । यत्तु विशेष्य-विशेषण-ससर्गतानवगाहिज्ञान निर्विकल्पकमिति नैयायिकोपपादित तन्नात्र ग्राह्यम्, तस्याऽत्राऽकिञ्चित्करत्वात् । अन्ये तु परमार्थभूत शुद्धवस्तुप्रकाशक ज्ञान निर्विकल्पकमित्याहु । ज्ञेयभेदेनाऽप्रकाशकत्वे सति ज्ञानवेदन निर्विकल्पकमित्यपरे । न च प्राक् [१३/९ पृ ३०६] चतुर्थी करुणा केवलिनि प्रतिपादिताऽत्र तु मैत्र्यादिव्यवच्छेद. निष्पन्नयोगानामुक्त इति विरोध इति शङ्कनीयम्, निर्विकल्पाभ्यासेन सविकल्पकमैत्र्यादिभावनानाशेऽपि निर्विकल्पात्मना तदनुवृत्तेरिष्टत्वात् । तदुक्त **स्याद्वादरहस्ये** —> भगवता मोहाभिव्यक्तचैतन्यविशेषरूपाया इच्छाया असत्त्वेऽपि तदनभिव्यक्तचैतन्यविशेषरूपानुजिघृक्षादिसत्त्व न विरुद्धम् <— [म स्या रह का ७ द्वि ख पृ ५२८] । अत्रानुजिघृक्षा = अनुग्रहपरिणाम = हितपरिणति = कल्याणाशय = उचिताध्यवसाय. । यथा चैतत्तत्त्व तथाऽस्माभिर्जयलताभिधानाया तट्टीकायामभिहितम् । **ऐन्द्रस्तुतिचतुर्विंशतिकावृत्तौ** अपि —> भगवत सर्वेष्वपि जीवेषु अविशेषेण कृपालुत्वात् कृपाऽस्त्येव, अन्यथा माध्यस्थ्यहानिप्रसङ्गात् <— [६/१] इत्युक्तम् । बीजजन्यवृक्षफलेषु बीजसद्भाववत् निर्विशेषप्रकृष्टविशुद्धकरुणोपहिततीर्थङ्करत्वशालिनि करुणासद्भावोऽनाविल एवेत्यपि प्राहु. । प्रागुक्तमैत्र्यादिफलसद्भावात्तत्त्वत' तदनिवृत्तिरित्यपि नयान्तराभिप्रायो विभावनीयोऽत्र । **इतरासम्भविना** = सुखादिचिन्तान्येर्ष्यादिसम्भवशून्येन **प्रकारेण** —> मत्त कायादयो भिन्नास्तेभ्योऽहमपि तत्त्वत । नाहमेषा किमप्यस्मि ममाप्येते न किञ्चन ॥ एव सम्यग्विनिश्चित्य स्वात्मान भिन्नमन्यत । विधाय तन्मय भाव न किञ्चिदपि चिन्तयेत् ॥ <— [५/१८-१९] इति **तत्त्वानुशासना**द्युक्तस्वरूपमालम्ब्य **परमार्थाभ्यासात् प्रकृष्टभावनाजनित-तद्विप्रमुक्ततत्त्वज्ञानाऽऽहितसस्कारात्** = प्रकृष्टमैत्र्यादिभावनाजनितेन मैत्र्यादिविकल्पाननुविद्धतत्त्वज्ञानेन उपहितात् सस्कारात् । **परोपकारैकशील** = मोहाऽसम्पृक्तान्यहितकरणैकस्वभावम् । **तन्मात्रमेव** = निर्मलज्ञानमात्रमेव हि चित्त **निष्पन्नयोगानाम्** । तदुक्त **मुक्तिकोपनिषदि** —> मानसीर्वासना पूर्व त्यक्त्वा विषयवासना. । मैत्र्यादिवासनानाम्नीर्गृहाणाऽमलवासना ॥ ता अप्यत' परित्यज्य ताभिर्व्यवहरन्नपि । अन्त शान्त समस्नेहो भव चिन्मात्रवासन ॥ <— [२/६९-७०] इति । तादृशनिर्विकल्पदशायामेव तत्त्वत सुखसवेदनम् । तदुक्त **बृहत्कल्पभाष्ये** —> निव्विकप्पसुह सुह <— [५७१७] इति । परमतानुसारेण समाधिदशाऽत्राऽवबोद्धव्या, तदुक्त **विष्णुपुराणे** —> तस्यैव कल्पनाहीन स्वरूपग्रहण हि यत् । मनसा ध्याननिष्पाद्य समाधि सोऽभिधीयते ॥ <— [६/७/९२] तस्य = ध्येयस्य । परेषामपि सम्मतमिदम् । तदुक्त **बृहत्सन्यासोपनिषदि** —> भ्रष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता । हृदि जीवन्विमुक्ताना शुद्धा भवति वासना ॥ पावनी परमोदाराशुद्धसत्त्वानुपातिनी । आत्मध्यानमयी नित्या सुप्रतिष्ठेव तिष्ठति ॥ [२/५९-६०] <— इति ।

યોગીઓનુ ચિત્ત કેવુ હોય ? આ વાતને ગ્રથકારશ્રી જણાવે છે

<u>ગાથાર્થ</u> :- નિષ્પન્નયોગવાળા યોગીઓનુ ચિત્ત મૈત્રી વગેરે ભાવનાઓથી રહિત જ હોય છે તેમ જ તત્ત્વના અભ્યાસથી પરાર્થ કરનાર જ હોય છે તથા કેવલ સદ્બોધસ્વરૂપ જ હોય છે [૧૩/૧૨]

## ❀ નિષ્પન્ન યોગીના ચિત્તનો પરિચય ❀

<u>**ટીકાર્થ**</u> :- નિષ્પન્નયોગીઓનુ ચિત્ત મૈત્રી આદિ ભાવનાઓથી રહિત હોય છે, કારણ કે નિર્વિકલ્પક સસ્કાર દ્વારા મૈત્રી વગેરે ભાવનાઓનો નાશ થાય છે બીજા કોઈ જીવોમા ન સભવી શકે તેવા પારમાર્થિક તત્ત્વોના અભ્યાસથી અર્થાત્ પ્રકૃષ્ટ મૈત્રી વગેરે ભાવનાથી ઉત્પન્ન થયેલ અને મૈત્રી વગેરે ભાવનાથી તદ્દન મુક્ત બનેલ એવા તત્ત્વજ્ઞાનથી આવેલ સસ્કારથી નિષ્પન્ન યોગીનુ ચિત્ત પરોપકાર કરવાના જ એકમાત્ર સ્વભાવવાળુ હોય છે કારણ કે તેઓનુ ચિત્ત બીજા દોષથી રહિત જ્ઞાનમાત્રસ્વરૂપ જ

१ मुद्रितप्रतौ —> ज्ञानादीतरसस्कारा <— इत्यशुद्ध पाठ ।

—> दोषव्यपाय परमा च वृत्तिरौचित्ययोग समता च गुर्वी । वैरादिनाशोऽथ ऋतभरा धी निष्पन्नयोगस्य तु चिह्नमेतत् ॥ <— । पूर्वलक्षणञ्चैतत् —> अलौल्यमारोग्यमनिष्ठुरत्व गन्ध शुभो मूत्रपुरीषमल्पम् । कान्ति प्रसाद स्वरसौम्यता च योगप्रवृत्ते प्रथम हि चिह्नम् ॥ मैत्र्यादियुवत विषयेषु चेत प्रभाववद्धैर्यसमन्वितञ्च । द्वन्द्वैरधृष्यत्वमभीष्टलाभो जनप्रियत्वञ्च तथा पर स्यात् ॥ <— इति ॥१३/१२॥

अभ्यासक्रमेण मैत्र्यादिपरिणतिर्भवती त्युक्तम् (१३/११) । स कथ शुद्ध ? केषाञ्च स्यात् ? इत्याह —> **'अभ्यासोऽपी'**त्यादि ।

**अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः । कुलयोग्यादीनामिह तन्मूलाधानयुक्तानाम् ॥१३/१३॥**

**अभ्यासोऽपि** = परिचयोऽपि **प्राय** = बाहुल्येन **प्रभूतजन्मानुग** = बहुतरभवानुवृत्त **शुद्ध** = निर्दोषो **भवति**

**कल्याणकन्दली**

यत्तु **भगवद्गीताया** —> शक्नोतीहैव य. सोढु प्राक् शरीरविमोक्षणात् । कामक्रोधोद्भव वेग स योगी स सुखी नर. ॥ <—[५/२३] इत्युक्तम्, **तत्तु** आरब्धयोगस्यापेक्षया बोध्यम् । निष्पन्नयोगस्य तु काम-क्रोधादिविनिर्मुक्तमेव चेतः सदा कालमिति ध्येयम् । अन्येषामपि परिक्षीणविकल्पत्वेनाऽयमभिमतः, यथोक्त —> शय्यासनस्थोऽथ पथि व्रजन्वा स्वस्थ. परिक्षीणवितर्कजालः । ससारबीजक्षयमीक्षमाण. स्यान्नित्यमुक्तोऽमृतभोगभोगी ॥ <—[ ] इति । तथा च तच्चित्त सकल्प-विकल्पवृत्तिरहित शुद्धज्ञानमात्रमित्यर्थः । इदमेवाभिप्रेत्य **मार्कण्डेयपुराणे**ऽपि —> युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि । तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि सत्यजेत् ॥ <—[३/४५] इत्युक्तम् । एतादृशज्ञानयोगदग्धकर्म-क्लेशादयो न पुनरुत्पद्यन्त इति परेषामपि सम्मतम् । तदुक्त **मोक्षधर्मे** —> बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुन. । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुन. ॥ <—[२११/१७] इति । भगवद्गीतायामपि —> ज्ञानाग्नि. सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ' <—[४/३७] इत्युक्तम् । **शार्ङ्गधरपद्धतिसवादमाह —> अलौल्य**मित्यादि । तदुक्त **स्कन्दपुराणे**ऽपि —> अलौल्यमारोग्यमनिष्ठुरत्व गन्ध. शुभो मूत्रपुरीषयोश्च । कान्ति. प्रसाद स्वरसौम्यता च योगप्रवृत्ते. प्रथम हि चिह्नम् ॥ <— [माहेश्वरखण्ड-कुमारिकाखण्ड ५५/१३८] इति । तदुक्त **श्वेताश्वतरोपनिषदि** —> लघुत्वमारोग्यमलोलुपत्व वर्णप्रसाद. स्वरसौष्ठव च । गन्ध. शुभो मूत्रपुरीषमल्प योगप्रवृत्ति प्रथमा वदन्ति ॥ <—[२/१३] इति ॥१३/१२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> तन्मूलाधानयुक्ताना कुलयोग्यादीना इह अभ्यासोऽपि हि प्राय. प्रभूतजन्मानुग. शुद्धो भवति ॥१३/१३॥ इय कारिका **द्रव्यसप्ततिकावृत्ति-लोकविशिकावृत्ति-पञ्चाशकवृत्त्यादौ** [द्र स.गा ८ लो.वि गा ७ पचा. १/२६ वृ पृ ४१] समुद्धृता ।

मैत्र्यादीना **अभ्यासोऽपि = परिचयोऽपी**ति । स च दीर्घकाल-नैरन्तर्य-सत्काराऽऽसेवितो दृढभूमि. [१/४] इति **योगसूत्रकारः** । सतत प्रवर्धमान सदभ्यासो हि भावना भण्यते । यथोक्त **योगभेदद्वात्रिंशिकाया** —> अभ्यासो वृद्धिमानस्य बुद्धिसङ्गत' । निवृत्तिरशुभाभ्यासाद्भाववृद्धिश्च तत्फलम् ॥ <— [द्वा द्वा १८/९] इति । अन्यत्रापि —> जन्मान्तरे यदभ्यस्त

હોય છે નિષ્પન્નયોગીઓનુ લક્ષણ આ પ્રમાણે છે —> ¹દોષરહિતતા, ²વિશુદ્ધ મનોવૃત્તિ, ³ઔચિત્યલાભ, ⁴પ્રકૃષ્ટ સમતા, ⁵વૈરાદિનો નાશ, ⁶ઋતુભરા = સત્યતાઅવગાહી બુદ્ધિ <— આ નિષ્પન્નયોગીનુ લક્ષણ છે યોગાભ્યાસીના લક્ષણ આ મુજબ છે —> ¹રસલપટતાનો અભાવ, ²આરોગ્ય, ³નિષ્ઠુરતાનો અભાવ, ⁴સુગધ, ⁵મળ-મૂત્રની અલ્પતા, ⁶કાતિ-તેજ, ⁷પ્રસન્નતા અને ⁸સૌમ્ય અવાજ આ યોગપ્રવૃત્તિનુ પ્રથમ ચિહ્ન છે તેમ જ જીવોના વિશે મૈત્રી વગેરેથી વાસિત ચિત્ત⁹, પ્રભાવશાળી ચિત્ત¹⁰, ધૈર્યયુક્ત ચિત્ત¹¹, સુખ-દુ ખ, ઠડી-ગરમી, અનુકૂળતા-પ્રતિકુળતા વગેરે દ્વન્દ્વોથી પરાભવ ન પામવાપણુ¹², મનોવાછિતપ્રાપ્તિ¹³ અને શ્રેષ્ઠ લોકપ્રિયતા¹⁴ પણ હોય <— [૧૩/૧૨]

**વિશેષાર્થ** - નિષ્પન્નયોગીનુ ચિત્ત તો તત્ત્વાભ્યાસથી પરાર્થકારી જ નિર્દોષ જ્ઞાનસ્વરૂપ બની ગયુ હોવાથી તેમનામા મૈત્રી વગેરે ભાવનાઓ હોતી નથી મૈત્રી વગેરે ભાવો પ્રકૃષ્ટ રીતે આત્મસાત્ કર્યા બાદ જે સૂક્ષ્મ બુદ્ધિગમ્ય પારમાર્થિક તત્ત્વોના જ્ઞાનથી જન્ય નિર્વિકલ્પક સસ્કાર દ્વારા મૈત્રી વગેરે ભાવના નાશ પામવા છતા ચિત્ત પરોપકારરસિક બને છે તીર્થકર પરમાત્માઓ વગેરેના જીવનમા દૃષ્ટિપાત કરતા આ વાત બરાબર સગત થઈ જાય છે [૧૩/૧૨]

અભ્યાસ દ્વારા કાલક્રમે મૈત્રી વગેરે પરિણતિ આત્મસાત્ થાય છે - આ વાત આગલી ગાથામા જણાવી 'એ અભ્યાસ કેવી રીતે અને કોને શુદ્ધ થાય ?' આ વાતને ગ્રથકારશ્રી જણાવે છે

**ગાથાર્થ** - પ્રસ્તુતમા મૈત્રી વગેરેના બીજન્યાસથી યુક્ત એવા કુલયોગી વગેરેનો અભ્યાસ પણ પ્રાય અનેક જન્મોમા અનુગત હોય તો શુદ્ધ થાય છે [૧૩/૧૩]

**❀ અભ્યાસશુદ્ધિ ❀**

**ટીકાર્થ** - અભ્યાસ = પરિચય પણ મોટા ભાગે ઘણા બધા ભવોમા ચાલે તો દ્ધ = નિર્દોષ થાય છે જેમ સેકડો વખતના

शतक्षारपुटशोध्यरत्नन्यायेन **कुलयोग्यादीनां** = गोत्रयोगिव्यतिरिक्तानां कुलयोगि-प्रवृत्तचक्रप्रभृतीनां **इह** = प्रक्रमे तासां = मैत्र्यादीनां **मूलाधानं** = मार्गानुसारिक्रियाजनित-पुण्यानुबन्धिपुण्यलक्षणबीजन्यासः, तद्युक्तानाम् । तत्र

**कल्याणकन्दली**

तद्व्याप्युपपद्यते । हिम्राहिम्रे मृदुक्रूरे तस्मात्तत्तस्य गच्छते ॥ <— [ ] इत्युक्तम् । जिनाज्ञाभ्यास एव हि जिनाराधनोपायः यथोक्तं —> यस्य चाराधनोपायः सदाज्ञाभ्यास एव हि । यथाशक्तिविधानेन नियमात्स फलप्रदः ॥ <— [ ] इति । बहुतरभवानुवृत्तः निर्दोषो भवति, तत्संस्कारप्रकर्षात् । इदमेवाभिप्रेत्य **योगवाशिष्ठे** —> विषाण्यमृततां यान्ति सततं अभ्यासयोगतः <— [निर्वाणप्रकरणे उत्तरार्धे ६७/२८] इत्युक्तम् । एतेनेदमपि ज्ञायते यदुत सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवतीति । बाढोऽपि अभ्यासो हि कर्मणां कौशलमावहति । न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधातीति तत्त्वं व्यक्तमुक्तं द्रव्यसप्ततिकावृत्तौ [गा. ८ पृ. १०] । यथोक्तं परैः —> अभ्यासेन क्रियाः सर्वा अभ्यासात् सकला कला । अभ्यासाद् ध्यानमौनादि किमभ्यासस्य दुष्करम् ॥ <— [ ] इति । अन्यत्रापि —> अभ्यासो हि कर्मणां कौशलमावहति <— [ ] इत्युक्तम् । —> जं अब्भसेइ जीवो गुणं च दोसं च एत्थ जम्मम्मि । तं पावइ परलोए तेण य अब्भासजोगेण ॥ <— [ ] इत्यपि प्रसिद्धम् । यथोक्तं **वीरभद्रसूरिभिः आराधनापताकायां** —> जह खलु दिवसऽब्भत्थं रयणीए सुमिणयम्मि पिच्छंति । तह इह जम्मब्भत्थं सेवंति भवंतरे जीवा ॥९८१॥ <— इति । इयञ्च गाथा **योगशतके** मूलकृदुद्धृता । अन्यत्रापि —> प्रादुर्भवेद् यथाभ्यासं संस्कारो हि भवान्तरे <—[ ] इत्युक्तम् । **योगशास्त्रे**ऽपि तदनुसारेणैव —> जन्मान्तरसंस्कारात्स्वयमेव किल प्रकाशते तत्त्वम् । सुप्तोत्थितस्य पूर्वप्रत्ययवन्निरुपदेशमपि ॥ <— [१२/१३] इत्युक्तं श्रीकलिकालसर्वज्ञेन । दृढाभ्यासाऽऽहितसंस्कारादेवाऽग्रेतनगुणप्राप्तिरपि झटिति सुकरा च भवति । यथोक्तं **बोधिचर्यावतारे** —> न किञ्चिदस्ति तद्वस्तु यदभ्यासस्य दुष्करम् <— [६/१४] । अभ्यासेनैव ज्ञानदीपकप्रकाशप्रसारः । तदुक्तं **योगकुण्डल्युपनिषदि** —> यथाऽग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना । विना चाभ्यासयोगेन ज्ञानदीपस्तथा न हि ॥ <— [३/१४-१५] इति । —> यथाभ्यासेन शास्त्राणि स्थिराणि स्युर्महान्त्यपि । तथा ध्यानमपि स्थैर्यं लभतेऽभ्यासवर्तिनाम् ॥ <— [३/१४] इति **तत्त्वानुशासन**वचनमप्यत्र स्मर्तव्यम् । **भगवद्गीतायां** —> प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः । अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ <— [६/४५], **योगशिखोपनिषदि** च —> पूर्वजन्मकृताभ्यासात् सत्वरं फलमश्नुते <— [१/१४३] इति प्रोक्तम् । न ह्यभ्यासविकले वक्ष्यमाणपरतत्त्वं प्राप्यते, तदुक्तं **भगवद्गीतायामपि** —> अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ <— [८/८] इति । एतेन योगाभ्यासादिहैव मुक्त्यनुपधाने व्यर्था योगप्रवृत्तिरित्यपि प्रत्याख्यातम्, इह योगासमाप्तौ परत्र तदनुकूलसामग्रीप्राप्तिसम्भवात् । इदमेवाभिप्रेत्य **भगवद्गीतायां** —> शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । अथवा योगिनामेव कुले भवति धीमताम् ॥ <— [भ. गी. ६/४१-४२] इत्युक्तम् । योगभ्रष्टत्वञ्च न विघ्यादिभञ्जकत्वं किन्तु योगारम्भकत्वे सति विधिविशुद्धप्रवृत्त्या तत्परिपालकत्वे सति कालादिसामग्रीवैकल्यात् तदसमापकत्वम् । न च नानाजन्मव्यवधानेनाऽभ्यासशुद्ध्यादिप्रतिपादनमसङ्गतमिति शङ्कनीयम्, कालक्रमसाध्यस्यार्थस्य शीघ्रमनुपस्थितेः । न खलु न्यग्रोधबीजानि अद्यैव न्यग्रोधशाखिनं सान्द्रशाद्वलदलजटिलशाखाकाण्डनिपीतमार्तण्डचण्डातपमण्डलमारभन्ते किन्तु क्षितिसलिलानिलसम्पर्कात्परम्परोपजायमानाङ्कुर-पत्र-काण्ड-नालादिक्रमेण । एवमिहापि युक्त्यागमसिद्धः कालक्रम आस्थेयः । इदञ्चौत्सर्गिकम् । ततो न मरुदेव्यादिना व्यभिचार उद्भावनीय इति दिक् ।

**गोत्रयोगिव्यतिरिक्तानां**, गोत्रयोगिनां श्रुतशक्तिवैकल्यात् न योगशुद्धिसम्भवः । **कुलयोगि-प्रवृत्तचक्रप्रभृतीनां प्रक्रमे मैत्र्यादीनां मार्गानुसारिक्रियाजनित-पुण्यानुबन्धिपुण्यलक्षणबीजन्यासः** = मार्गानाभोगेऽपि सदन्धन्यायेन मार्गानुसारिक्रियया जनितस्य पुण्यानुबन्धिपुण्यलक्षणस्य बीजस्य वपनं तद्युक्तानाम् । इदञ्च हेतुगर्भविशेषणम् । कुलयोग्यादीनां श्रुतशक्तिसमावेशात्

ક્ષારના પુટ-પડો દ્વારા રત્ન શુદ્ધ થાય છે એ દૃષ્ટાંતથી આ વાત સમજવી. [કેવા જીવોનો અભ્યાસ શુદ્ધ થાય ? તેનો જવાબ એ છે કે] ગોત્રયોગીથી ભિન્ન એવા કુલયોગી, પ્રવૃત્તચક્રયોગી વગેરે યોગીઓ, કે જેઓ મૈત્રી વગેરે ભાવનાઓના માર્ગાનુસારી ક્રિયાથી ઉત્પન્ન થયેલ પુણ્યાનુબંધી પુણ્યસ્વરૂપ બીજના ન્યાસથી યુક્ત છે, તેઓનો મૈત્રી વગેરે સંબંધી અભ્યાસ પ્રસ્તુતમાં વિવક્ષિત છે.

## ૪ પ્રકારના યોગીઓ

[યોગીઓ ૪ પ્રકારના છે. [૧] ગોત્રયોગી, [૨] કુલયોગી, [૩] પ્રવૃત્તચક્રયોગી અને [૪] નિષ્પન્ન યોગી.] એમાં [૧] ગોત્રયોગી તેને જાણવા કે જે માત્ર ગોત્રથી-નામથી 'યોગી' છે. પરંતુ વાસ્તવમાં યોગ સાથે એમને કશી નિસ્બત નથી. સામાન્યથી તેમના પૂર્વજો યોગ સાધતા હોવાના કારણે તેઓ ભૂમિભવ્ય = સુંદરગોત્રવાળા કહેવાય. પરંતુ પછીથી સાધના નીકળી ગઈ ને માત્ર 'યોગી' ગોત્ર-નામ રહ્યું. દા.ત. કબીરનો અશ્રદ્ધાળુ અવસ્થાવાળો દીકરો. [૨] 'કુલયોગી' તેમને જાણવા કે જે યોગીના કુળમાં

गोत्रयोगिन –> सामान्येनोत्तमा भव्या सर्वत्राऽद्वेषिण (?) <–, कुलयोगिन –> ये योगिना कुले जाता तद्धर्मानुगताश्च ये। <– प्रवृत्तचक्राश्च प्रवृत्तरात्रिन्दिवानुष्ठानसमूहा ज्ञेया ॥१३/१३॥ केन प्रकारेण कस्यायमभ्यास शुध्यति ? इत्याह –> **अविराधनया'** इत्यादि।

**अविराधनया यतते यस्तस्यायमिह सिद्धिमुपयाति। गुरुविनयः श्रुतगर्भो मूलञ्चास्या अपि ज्ञेयः ॥१३/१४॥**

**कल्याणकन्दली**

ज्ञानपूर्वकेनाभ्यासेन शुद्धयमानस्य सदनुष्ठानस्य मुक्त्यङ्गताऽभीष्टा, तदुक्त **योगदृष्टिसमुच्चये** –> ज्ञानपूर्वाणि तान्येव मुक्त्यङ्ग कुलयोगिनाम्। श्रुतशक्तिसमावेशादनुबन्धफलत्वत. ॥१२५॥ अमृतशक्तिकल्पश्रुतशक्तिविरहे न मुख्य कुलयोगित्वमिति भावः। इह योगिन. चतुर्विधा भवन्ति, गोत्रयोगिन, कुलयोगिन, प्रवृत्तचक्रयोगिनः, निष्पन्नयोगिनश्च। **तत्र गोत्रयोगिनः** = गोत्रमात्रेण योगिन. **सामान्येन उत्तमाःभव्याः** = भूमिभव्या अपि मलिनान्तरात्मतया योगसाध्यफलाभावान्न योगप्रयोगाधिकारिण.। **कुल-योगिनः –> ये योगिना कुले जाताः** = लब्धजन्मानः **तद्धर्मानुगताश्च** = योगिधर्मानुसरणवन्तश्च **ये** = प्रकृत्याऽन्येऽपि द्रव्यतो भावतश्च कुलयोगिन उच्यन्ते। तदुक्त **योगदृष्टिसमुच्चये** –> ये योगिना कुले जातास्तद्धर्मानुगताश्च ये। कुलयोगिन उच्यन्ते गोत्र-वन्तोऽपि नाऽपरे ॥२१०॥ सर्वत्राऽद्वेषिणश्चैते गुरु-देव-द्विज-प्रिया.। दयालवो विनीताश्च बोधवन्तो यतेन्द्रिया ॥२११॥<– इति। **प्रवृत्तचक्राश्च प्रवृत्तरात्रिन्दिवानुष्ठानसमूहा ज्ञेयाः**, उपलक्षणात् इच्छायम-प्रवृत्तियमाश्रया. स्थिर-सिद्धि-यमद्वयार्थिन इत्यादि ज्ञेयम्। तदुक्त **योगदृष्टिसमुच्चये** –> प्रवृत्तचक्रास्तु पुनर्यमद्वयसमाश्रया। शेषद्वयार्थिनोऽत्यन्त शुश्रूषादिगुणान्विताः ॥२१२॥ <–इति। योगावश्चकप्राप्त्या अवन्ध्यभव्यत्वेन च क्रियाऽवश्चक-फलावश्चकद्वयलाभिन कुल-प्रवृत्तचक्रयोगिन. योगप्रयोगाधिकारिणः। तदुक्त **योगदृष्टिसमुच्चये** –> आद्यावश्चकयोगाप्त्या तदन्यद्वयलाभिन। एतेऽधिकारिणो योगप्रयोगस्येति तद्विद. ॥ <–[यो.दृ २१३ द्वा द्वा १९/२४]इति। निष्पन्नयोगिनस्तु योगसिद्धिभावादेव नाधिकारिण'। तदुक्त **योगदृष्टिसमुच्चये** –> कुल-प्रवृत्तचक्रा ये त एवास्याधिकारिण। योगिनो न तु सर्वेऽपि तथाऽसिद्धयादिभावत ॥२०९॥ अधिक तु तद्वृत्त्यादितोऽवसेयम् ॥१३/१३॥

જન્મેલા હોય અને યોગીના પ્રારભિક ગુણોને અનુસરનારા હોય [૩]-'પ્રવૃત્તચક્ર યોગી' તેમને જાણવા કે જેમની રાત-દિવસ ચક્રમા = યોગચક્રમા = અનુષ્ઠાનસમૂહમા પ્રવૃત્તિ હોય છે [ઈચ્છાયમ-પ્રવૃત્તિયમને સાધનારા હોય છે અને સ્થૈર્યયમ-સિદ્ધિયમની તીવ્ર ઈચ્છાવાળા હોય છે] [૪] નિષ્પન્નયોગી તેમને જાણવા કે જેમણે યોગ સિદ્ધ કરેલ છે [૧૩/૧૩]

## ❊ અનંતા ઓઘા નિષ્ફળ નથી ❊

**__વિશેષાર્થ__** - શ્રીહરિભદ્રસૂરિપુરદર લખે છે કે અનેક જન્મો પછી મૈત્રી વગેરે ભાવનાઓનો અભ્યાસ શુદ્ધ થાય છે આનુ કારણ એ છે કે અનાદિ કાળથી મોહપરસ્ત આત્મામા શુભ સસ્કારની-શુદ્ધિની મૂડી જ નથી અને અશુભ સસ્કાર-અશુદ્ધિ ભરચક છે ચરમાવર્ત કાળમા આવ્યા બાદ પણ અશુભ સસ્કાર અને અશુદ્ધિ રહેલી તો છે જ તેથી ચારિત્ર વગેરેનો અભ્યાસ કરે તો પ્રારભમા જ તે શુદ્ધ થાય એ શક્ય નથી જન્મોજન્મ સુધી ચારિત્રનો-સદનુષ્ઠાનનો નિરતર આદરસહિત અભ્યાસ કરે પછી જ પ્રાય તે શુદ્ધ થાય છે પ્રત્યેક ચારિત્ર-સદનુષ્ઠાનના અભ્યાસથી શુદ્ધિ થઈ રહેલી જ છે પરતુ સપૂર્ણ શુદ્ધિ અનેક ભવોના અભ્યાસ પછી જ થાય જેમ મોટા તળાવમાથી કોઈ એક ઘડો પાણી બહાર કાઢે તો તળાવના પાણીમા ઘટાડો જરૂર થાય છે પરતુ તે ઘટાડો ખ્યાલમા નથી આવતો - આખ દ્વારા તેની નોધ થઈ શકતી નથી પરતુ રોજ ૧ ઘડો પાણી ખાલી કરતા કરતા લાબા ગાળે તે તળાવ સપૂર્ણ ખાલી થાય છે માટે તળાવ ખાલી કરવાનો પ્રત્યેક પ્રયત્ન સફળ કહેવાય તે જ રીતે અનત ચારિત્ર લેવા દ્વારા તેનો અભ્યાસ કરવાથી ધીમે-ધીમે શુદ્ધિ વધે જ છે પરતુ તે નોધપાત્ર નથી હોતી **યોગબિંદુ** વગેરે ગ્રથોમા અચરમાવર્તકાળમા પણ પ્રત્યેક પુદ્ગલપરાવર્તમા અશુદ્ધિમા ઘટાડો અવશ્ય થાય છે તેમ જણાવેલ જ છે [યોગબિંદુ ગા ૧૭૦] માટે અનતા ઓઘા એકાતે નિષ્ફળ ગયા ન કહેવાય હા, અચરમાવર્ત કાળની અપેક્ષાએ ચરમાવર્ત કાળમા ચારિત્રઅભ્યાસ દ્વારા શુદ્ધિ ઝડપથી-વધુ પ્રમાણમા થાય એવુ જરૂર કહી શકાય ચરમાવર્તમા પણ ચારિત્ર-સદનુષ્ઠાનાદિનો અભ્યાસ આદર-વિધિ-યતનાપૂર્વક થાય તો વધુ ઝડપથી સાનુબધ અશુદ્ધિહ્રાસ થાય - એ વાત ભૂલવી ન જોઈએ અહીં આ વાત પણ ધ્યાનમા રાખવી કે પેસેફિક મહાસાગર કે સ્વયભૂરમણસમુદ્રમાથી રોજ ૧ ઘડો પાણી કાઢીએ કે દરીયામા ઓટ આવે તો પણ તે ક્યારેય સપૂર્ણ ખાલી ન થાય તેમ અભવ્ય જીવ ચારિત્રના અભ્યાસ દ્વારા થોડી ઘણી [દા ત એકાદ ઘડા જેટલી] અશુદ્ધિ ઘટાડે યાવત્ યથાપ્રવૃત્ત કરણ સુધીની શુદ્ધિને પામે [અર્થાત્ દરિયામા અમાસની રાત્રે આવતી ઓટથી થતા પાણીના ઘટાડા જેટલી અશુદ્ધિના ઘટાડાથી શુદ્ધિ પામે] તો પણ તે ક્યારેય પણ સપૂર્ણ શુદ્ધ બનતો નથી મૂલ ગાથામા 'પ્રાય' પદ મૂકેલ છે તેથી મરુદેવા માતા વગેરે દૃષ્ટાતમા વ્યભિચારનો પરિહાર થઈ જાય છે [૧૩/૧૩]

'કઈ રીતે કોને આ અભ્યાસ શુદ્ધ થાય છે ?' આ પ્રશ્નનો જવાબ આપતા ગ્રથકારશ્રી જણાવે છે કે —

**__ગાથાર્થ__** .- જે વિરાધનાને છોડીને પ્રયાસ કરે છે તેને પ્રસ્તુતમા અભ્યાસ સિદ્ધ થાય છે વિરાધનાત્યાગનુ મૂળ પણ શ્રુતગર્ભિત

अविराधनया = अपराधपरिहारेण य पुरुषो यतते = प्रयत्न विधत्ते तस्य अय = अभ्यास इह = प्रक्रमे सिद्धिमुपयाति, आज्ञाभङ्गभीतिपरिणामस्य तथाविधजीववीर्यप्रवर्धकत्वात् । अस्या अपि अविराधनाया मूल = कारण गुरुविनय श्रुतगर्भ = आगमसहितो ज्ञेय , तेनाऽऽज्ञास्वरूपज्ञानसम्भवात् ॥१३/१४॥ गुरुविनयस्य कि मूलम् ?' इत्याह —> 'सिद्धान्ते'त्यादि ।

सिद्धान्तकथा सत्सङ्गमश्च मृत्युपरिभावन चेव । दुष्कृत-सुकृतविपाकालोचनमथ मूलमस्यापि ॥१३/१५॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> य इह अविराधनया यतते तस्य अय सिद्धि उपयाति । अस्या अपि मूल श्रुतगर्भो गुरुविनय. ज्ञेय. ॥१३/१४॥

अपराधपरिहारेण = यतनया प्रयत्न विधत्ते तस्य अभ्यास· = योगाभ्यास सिद्धि = सिद्धत्वाख्यविशेष उपयाति —> भगे दारुणत्त, महामोहजणगत्त, भूओ दुलहत्त' <— [२/१] इतिपञ्चसूत्रादिवचनजातस्य आज्ञाभङ्गभीतिपरिणामस्य तथाविधजीववीर्यप्रवर्धकत्वात् = तथाविधाभ्यासशुद्ध्यनुकूलस्य जीवाना उत्साहस्य प्रवर्धकत्वात ।

अविराधनाया अपि कारण श्रुतगर्भो गुरुविनय , तेन = श्रुतगर्भगुरुविनयेन आज्ञास्वरूपज्ञानसम्भवात् = जिनाज्ञायोग-सम्बन्धिहेतु-स्वरूपानुबन्धगोचरस्य विज्ञानस्य उत्पादात्, तादृशविज्ञानाच्च यतनावरणक्षयोपशमाधानात् । तदुक्त दशवेकालिके —> जे आयरिय-उवज्झायाण सुस्सूसाविणय करे । तेसि सिक्खा पवड्ढति जलसित्ता इव पायवा ॥<— [९/२/१२] इति । विशेषावश्यकभाष्येऽपि —> चित्तण्णु अणुकूलो सीसो सम्म सुय लहइ <— [९३७] इत्युक्तम् । निशीथचूर्णो अपि —> विणओववेयस्स इह परलोगे वि विज्जाओ फल पयच्छति <— [नि चू १३] इत्युक्तम । ततश्च विनय. सर्वश्रेयोमूलम्, —> कल्याणाना सर्वेषा भाजन विनय <— [७४] इति प्रशमरतिवचनमप्यत्र सवदति । तदुक्त ज्ञाताधर्मकथाङ्गे —> विणयमूले धम्मे पन्नत्ते <— [१/५] । —> धम्मस्स मूल विणय वदति <— [४४४१] इति बृहत्कल्पभाष्यवचनमपि स्मर्तव्यमत्र । विशेषावश्यकभाष्येऽपि —> विणओ सासणे मूल विणीओ सजओ भवे । विणआओ विप्पमुक्कस्स कओ धम्मो कओ तवो ? ॥ <— [वि भा ३४६८] इत्युक्तम् । टीकाकृताऽपि विनयद्वात्रिंशिकाया —> इत्यश्च विनयो मुख्य सर्वानुगमशक्तित । मिष्टान्नेष्विव सर्वेषु निपतन्निभुजो रस ॥ <— [द्वा द्वा २९/२७] इत्युक्तमिति विभावनीय स्वसमयवेदिभि ॥१३/१४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> अथ अस्य अपि मूल सिद्धान्तकथा, सत्सङ्गम मृत्युपरिभावन चेव दुष्कृत-सुकृतविपाका-लोचनम् ॥१३/१५॥ सिद्धान्तकथा इति । ततश्च परिश्रान्तो यति कथामपि कुर्यात्, तदुक्त पञ्चवस्तुके —> सज्झायाईमतो

ગુરુવિનય જાણવુ [૧૩/૧૪]

## અભ્યાસશુદ્ધિજનક અવિરાધનાનું કારણ શું ?

**ટીકાર્થ** .- અપરાધસ્વરૂપ વિરાધનાનો પરિહાર કરીને જે પુરુષ પ્રયત્ન કરે છે તેને પ્રસ્તુતમા આ અભ્યાસ સિદ્ધિને પામે છે, કારણ કે આજ્ઞાભગના ભયનો પરિણામ જીવોનો તેવા પ્રકારનો વીર્યોલ્લાસ પ્રકૃષ્ટ રીતે વધારે છે અવિરાધાનાનુ = વિરાધનાના પરિહારનુ મૂળ કારણ આગમબોધયુક્ત એવો ગુરુવિનય જાણવો, કારણ કે આગમ દ્વારા જિનાજ્ઞાના સ્વરૂપનુ જ્ઞાન સભવે છે. [૧૩/૧૪]

## જ્ઞાનગર્ભિત ગુરુવિનય કદાપિ છોડશો નહિ

**વિશેષાર્થ** - આગમના પરિશીલનથી જિનાજ્ઞાના સ્વરૂપનુ તાત્ત્વિક જ્ઞાન થાય છે ગુરુવિનયથી આગમવાચના ગ્રહણ કરવાથી જિનાજ્ઞાનો બોધ આત્મામા પરિણમે છે જિનાજ્ઞાનુ તાત્ત્વિક જ્ઞાન પરિણત થવાથી તે જીવ બહુમાન-વિધિપૂર્વક ગુરુવિનયમા પ્રવૃત્ત થાય છે જેમ આબાના ઝાડ ઉપર કેરી ઊગે ત્યારે આબાની ડાળીઓ ઝૂકે છે તેમ તત્ત્વજ્ઞાન-આગમબોધ-જિનાજ્ઞાજ્ઞાન પરિણત થાય એટલે વ્યક્તિ વિવેકપૂર્વક વધુ વિનમ્ર બને છે, ગુરુવિનયમા ઉદ્યત થાય છે તેથી જિનાજ્ઞાનુ હેતુ-સ્વરૂપ-ફલ દ્વારા સર્વતોમુખી જ્ઞાન થાય છે આમ ગુરુવિનય અને આગમજ્ઞાન આ બન્ને એકબીજાના યોગ-ક્ષેમ-વિકાસને કરનાર બને છે આવો જ્ઞાનગર્ભિત ગુરુવિનય આત્મામા જિનાજ્ઞાનો ભગ ન થઈ જાય તેની સાવધાનીનો-ભીતિનો પરિણામ જાગૃત કરે છે, કારણ કે આજ્ઞાપાલનના સાનુબધ ઉત્કૃષ્ટ લાભો અને આજ્ઞાભગના ભયકર નુકશાનોનો તેને સારી રીતે ખ્યાલ છે તેના કારણે જિનાજ્ઞાપાલનનો વીર્યોલ્લાસ વધે છે, જિનાજ્ઞાભગનો ત્યાગ કરે છે, આદર-ઉલ્લાસ-વિનય-ઔચિત્ય-વિધિ-જયણાપૂર્વક જિનાજ્ઞાને પાળવાના લીધે ચારિત્ર-સદનુષ્ઠાન, મૈત્રી વગેરે ભાવના સબધી અભ્યાસ તેને સિદ્ધ થાય છે માટે બધાના મૂળમા રહેલ છે જ્ઞાનગર્ભિત ગુરુવિનય તેનો ક્યારેય ત્યાગ ન થઈ જાય તે માટે દરેક મુમુક્ષુએ ઘણી કાળજી રાખવા જેવી છે [૧૩/૧૪]

ગુરુવિનયનુ મૂળ કારણ શુ છે ? આ પ્રશ્નનો પ્રત્યુત્તર આપતા ગ્રથકારશ્રી જણાવે છે કે —

**ગાથાર્થ** .- ગુરુવિનયનુ પણ મૂળ છે સિદ્ધાન્તકથા, સત્સગ, મૃત્યુની પરિભાવના અને દુષ્કૃત-સુકૃતના વિપાકની વિચારણા [૧૩/૧૫]

**सिद्धान्तकथा** = स्वसमयप्रवृत्ति **सत्सङ्गमश्च** = सत्पुरुषसङ्गश्च, मृत्यो परिभावन **चैव** सर्वदा सर्वङ्कष-त्वादिरूपेण, दुष्कृताना = पापाना सुकृताना च पुण्याना यो विपाक = अनुभव तदालोचन = तद्विचारण हेतु-फलभावद्वारेण । **अथ** अनन्तर **मूल** = कारण **अस्यापि** = गुरुविनयस्य सर्वमेतत्समुदित, एतदर्थसिद्धेर्गुरुविनय-मूलत्वात् ॥१३/१५॥ अस्यैव सर्वस्याऽऽदेयतामुपदर्शयन्नाह –> **'एतस्मिन्नि'**त्यादि ।

**एतस्मिन् खलु यत्नो विदुषा सम्यक् सदैव कर्तव्यः । आमूलमिद परम सर्वस्य हि योगमार्गस्य ॥१३/१६॥**

**एतस्मिन् खलु** = अस्मिन्नेव प्रागुक्ते सिद्धान्तकथादौ **यत्न** = आदरो **विदुषा** = सुधिया **सम्यक्** = समीचीन **सदैव कर्तव्य, आमूल** = अभिव्याप्त्या कारण **इद** = सिद्धान्तकथादि **परम** = प्रधान[१] **सर्वस्य हि** = यतो **योगमार्गस्य** ॥१३/१६॥

**॥ इति त्रयोदश साधुसच्चेष्टा-षोडशकम् ॥**

कल्याणकन्दली

तित्थयरकुलाणुरूवधम्माण । कुज्झा कह जईण सवेगविवड्ढण विहिणा ॥९०२॥ जिणधम्मसुट्ठिआण सुणिज्ज चरिआइ पुव्व-साहूण । साहिज्जइ अन्नेसि जहारिह भावसाराइ ॥९०३॥ <– इति ।

**मृत्योः परिभावन चेव सर्वदा सर्वङ्कपत्वादिरूपेण** यथा –> छायामिसेण कालो सयलजीयाण छल गवेसतो । पास कहवि न मुचइ, ता धम्मे उज्जम कुणह ॥ [ ] इति **वैराग्यशतकादिवचनै** । **उत्तराध्ययनेऽपि** –> जहेव सीहो व मिय गहाय मच्चु नर नेइ हु अतकाले । न तस्स माया व पिया व भाया कालमि तमि सहरा भवति ॥ <– [१३/२२] इत्युक्तम् । **आचाराङ्गेऽपि** –> नत्थि कालस्स णागमो <– [१/२/३] इत्युक्तम् । तदुक्त **पञ्चसूत्रेऽपि** धर्मजागरिकाया –> भीसणो मच्चू, सव्वाभावकारी, अविन्नायागमणो, अणिवारणिज्जो पुणो पुणोऽणुबधी <– [२/१०] इत्यादिकम् । **धर्मोपदेशकुलकेऽपि** –> नियमत्थओवरिगय जइ मच्चु पेच्छई इमो लोगो । तो नाहारे वि रुइ करेज्ज किमकज्जकरणम्मि ॥ <– [८] इत्युक्तम् । **अन्यैरपि** –> गृहीत इव केशेषु मृत्युना धर्ममाचरेत् <– [ ] इत्युक्तम् । **पापाना योऽनुभवः तद्विचारण,** यथा –> शक्रेणाऽऽपन्निषेधार्थ य सिद्धार्थो न्ययुज्यत । गोशालोत्तरवेलाया जजृम्भे सोऽपि नान्यदा ॥ <– [ ] इति । एव सुकृत-विपाकालोचनमपि भावनीयम् । प्रकृतविशेषणविशिष्ट सदाचारपालन तु परै. विचारणाभिलापेन वर्ण्यते, तदुक्त **महोपनिषदि** –> शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्वकम् । सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा <– ॥२९५॥ **एतदर्थसिद्धे**· = परमार्थत सिद्धान्तसत्कथाद्यर्थप्राप्ते. **गुरुविनयमूलत्वात्,** गुरुविनय विना प्राप्तस्य सिद्धान्तश्रवणादे धनकीर्त्यादिवस्त्वन्तरोपायत्वेऽपि न परमार्थसाधकत्वमिति ध्येयम् । इदमेवाभिप्रेत्य **बृहत्कल्पभाष्येऽपि** –> विणयाऽहीया विज्जा देति फल इह परे य लोगम्मि । न फलति विणयहीणा सस्साणि व तोयहीणाइ ॥५२०३॥ <– इत्युक्तम् । इत्थञ्च योगत्रिकावेदनमकारि, तदुक्त **भागवते** –> योगास्त्रयो मया प्रोक्ता भक्ति-ज्ञान-क्रियात्मका. <– [११/२०/६] । पञ्चमादिषोडशकेषु भक्तियोग प्रदर्शित., एकादशे षोडशके ज्ञानयोग उपदर्शित , नवमे षोडशके इह च क्रियायोगो दर्शित इति ध्येयम् ॥१३/१५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> विदुषा एतस्मिन् खलु सदैव सम्यक् यत्न कर्तव्य हि सर्वस्य योगमार्गस्य इद परम आमूलम् ॥१३/१६॥ योगदीपिका स्पष्टा ॥१३/१६॥

इति मुनियशोविजयविरचिताया कल्याणकन्दल्या त्रयोदशषोडशक- योगदीपिकाविवरणम् ।

## ❀ ગુરુવિનયના કારણોને અપનાવીએ ❀

**ટીકાર્થ** - [૧] જૈન આગમિક સિદ્ધાન્તોની કથા = પ્રવૃત્તિ કરવી [૨] સત્પુરુષોનો સગ કરવો [૩] 'સર્વદા સર્વ જીવોને મૃત્યુ પોતાના તરફ ખેંચી રહ્યુ છે' ઈત્યાદિ સ્વરૂપે મૃત્યુની સર્વતોમુખી ભાવના-વિચારણા કરવી [૪] હેતુમુખે અને ફળમુખે પાપ અને પુણ્યના વિપાકની = અનુભવની વિચારણા કરવી આ ચારેય ભેગા થયેલા ગુરુવિનયના સાક્ષાત્ કારણ છે આ ચારેયની અર્થથી [માત્ર શબ્દથી નહિ] સિદ્ધિ થવી એ ગુરુવિનયનુ મૂળ કારણ છે [૧૩/૧૫]

'બધાને માટે આ જ ઉપાદેય = ગ્રહણ કરવા યોગ્ય છે' એવુ બતાવતા ગ્રથકારશ્રી કહે છે કે —

**ગાથાર્થ** - વિદ્વાને આમા જ સદાય સમ્યક્ યત્ન કરવો જોઈએ, કારણ કે બધા યોગમાર્ગનુ આ જ પરમ વ્યાપક કારણ છે [૧૩/૧૬]

**ટીકાર્થ** .- પૂર્વોક્ત સિદ્ધાન્તકથા વગેરેમા જ વિદ્વાને સદૈવ સમ્યક્ આદર કરવો જોઈએ કારણ કે આ સિદ્ધાન્તકથા વગેરે જ બધા યોગમાર્ગનુ પરમ અભિવ્યાપ્ત = સર્વવ્યાપી કારણ છે [૧૩/૧૬]

१ मुद्रितप्रतौ 'प्रधान' इति नास्ति ।

# ૧૩ મા ષોડશકનો સ્વાધ્યાય

(અ) નીચેના કોઈ પણ સાત પ્રશ્નોના સવિસ્તર જવાબ આપો

૧ ગુરુવિનય વર્ણવો
૨ યોગાભ્યાસનુ નિરૂપણ કરો
૩ સાધુની ભિક્ષાચર્યા પરાર્થકરણ કઈ રીતે ?
૪ મૈત્રીના ચાર ભેદ બતાવો
૫ પ્રમોદના ચાર પ્રકાર સમજાવો
૬ ચાર પ્રકારના યોગીઓ જણાવો
૭ અભ્યાસ કેવી રીતે શુદ્ધ બને ?
૮ ગુરુવિનયના કારણો જણાવો
૯ શ્રુતગર્ભિત ગુરુવિનયનો મહિમા જણાવો
૧૦ મૈત્રી વગેરે ભાવના કોને પરિણમે ?

(બ) યોગ્ય જોડાણ કરો

| | |
|---|---|
| (૧) સ્વાધ્યાય | (A) આગમ |
| (૨) ગુરુવિનય | (B) અપ્રમાદપરાયણતા |
| (૩) કાઉસગ્ગ | (C) શબ્દ |
| (૪) અવિરાધના | (D) પ્રતિમા |
| (૫) સ્વજન | (E) ગુરુવિનયકારણ |
| (૬) ઈતિકર્તવ્યતા | (F) પચવિધ |
| (૭) ઊર્ણ | (G) ચતુર્વિધ |
| (૮) આલબન | (H) દોષત્યાગ |
| (૯) કર્મવિપાક વિચાર | (I) નાલબન્દ્ર |
| (૧૦) પરમાનદહર્ષ | (J) ઉજી ચોથી ભાવના |

(ક) ખાલી જગ્યા યોગ્ય રીતે પૂર્ણ કરો

૧ સાધુની સુદર ચેષ્ટા ______ પ્રકારની છે (૫, ૬, ૧૨)
૨ ઉલ ગ્લાનને અપથ્ય આપવુ તે ______ કરુણા છે (મોહયુક્ત, અન્યહિતયુક્ત, સુખયુક્ત)
૩ પરિચિત વ્યક્તિ સાથે મિત્રતા તે ______ સબધીમૈત્રી કહેવાય (સ્વજન, ઈતર, સામાન્યજન)
૪ અપથ્યભક્ષણ વિશે આનદ તે ______ વિષયક પ્રમોદ જાણવો (સુખમાત્ર, પર, અનુબધ)
૫ ગ્લાનને અપથ્ય ખાતા ન રોકવો તે ______ ગર્ભિત ઉપેક્ષા બને (કરુણા, નિર્વેદ, અનુબધ)
૬ નિષ્પન્નયોગીનુ મન ______ હોય (મૈત્રીયુક્ત, પરોપકારી, ધૈર્યવાળુ)
૭ ______ એ યોગપ્રવૃત્તિનુ પ્રથમ લક્ષણ છે (ઋતભરા બુદ્ધિ, વૈરાદિનાશ, અલૌલ્ય)
૮ નામ માત્રથી યોગી હોય, વાસ્તવમા સદાચારશૂન્ય હોય તે ______ યોગી કહેવાય (ગોત્ર, કુલ, ભ્રષ્ટ)
૯ ______ ગર્ભિત વિનય વિરાધનાત્યાગનુ બળ આપે છે (જ્ઞાન, તપ, વૈરાગ્ય)
૧૦ મોક્ષમા મૈત્રી વગેરે ભાવો ______ (હોય, ન હોય, પ્રકૃષ્ટ હોય)

નોંધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો

# કલ્યાણકંદલીની અનુપ્રેક્ષા

## (અ) નીચેના પ્રશ્નોના વિસ્તારથી જવાબ આપો

૧ 'નાલપ્રતિબદ્ધ' એટલે શુ ? ઉદાહરણસહિત સમજાવો
૨ ચિત્તવૃત્તિનિરોધને યોગ કેમ ન મનાય ?
૩ યોગની અલગ-અલગ સાત વ્યાખ્યા જણાવો
૪ વસ્ત્રૈષણાવિધિ જણાવો
૫ સામાયિકમા ઉચિત પ્રવૃત્તિ શા માટે થાય ?
૬ ઈતિકર્તવ્યતાનુ નિરૂપણ કરો
૭ મૈત્રી વગેરે ભાવના કેવી રીતે આત્મસાત્ થાય ?
૮ યોગીના નિર્વિકલ્પ ચિત્તને ઓળખાવો
૯ અભ્યાસનુ સ્વરૂપ શુ છે ? તે કેવી રીતે શુદ્ધ બને ?
૧૦ ગુરૂવિનયનુ મહત્ત્વ ૧૦ મુદ્દામા જણાવો



## (બ) નીચેના પ્રશ્નોના સક્ષેપથી જવાબ આપો

૧ વૈયાવચ્ચ ગુરુમા કયા સબધથી રહે ? તે સમજાવો
૨ ગુરુબહુમાન મોક્ષસ્વરૂપ કઈ રીતે બને ?
૩ ખિન્ન થયેલ ગૌતમસ્વામીને ભગવાને શુ જણાવ્યુ
૪ આજ્ઞાયોગ ઓળખાવો
૫ વિનીતના પાચ લક્ષણ બતાવો
૬ મર્યાદા અને અભિવિધિનો ભેદ સમજાવો
૭ યોગના આઠ અગ બતાવો
૮ પાત્રૈષણાવિધિ જણાવો
૯ અવિધિથી સ્વાધ્યાય કરવામા શુ દોષ છે ?
૧૦ યોગસિદ્ધ પુરુષના લક્ષણ જણાવો
૧૧ ધર્મની વ્યાખ્યા જણાવો
૧૨ રાગાદિના બે પ્રકારના નાશ જણાવો
૧૩ મોહગર્ભિત કરુણા સમજાવો
૧૪ કરુણા અને ઉપેક્ષાના પ્રથમ ભેદમા અભેદ કેમ નથી ?
૧૫ બાહ્ય વસ્તુ રાગ-દ્વેષનુ કારણ કેમ નથી ?
૧૬ ક્ષમા વગેરે કોને સભવી શકે ?
૧૭ યોગારભના લક્ષણ જણાવો
૧૮ ભગવાનમા અનુગ્રહની ઈચ્છા કેવી રીતે સભવે ?
૧૯ યોગી પરમાર્થનો અભ્યાસ કેવી રીતે કરે ?
૨૦ ત્રણ યોગનુ સ્વરૂપ સમજાવો

## (ક) ખાલી જગ્યા પૂરો.

૧ આગમબોધ ______ છે (નમનશીલ, ઉદ્ધતતાયુક્ત, વ્યાપક)
૨ ______ દિવસમા અડધો શ્લોક કઠસ્થ થાય તો પણ જ્ઞાનપુરુષાર્થ ન છોડવો (૮, ૧૫, ૩૦)
૩ ધ્યાનસિદ્ધિ માટે ______ ની મુખ્ય આવશ્યકતા છે (એકાગ્રતા, મૈત્રીઆદિભાવના, યોગાસન)
૪ સ્વાધ્યાયથી થાકેલા સાધુઓ ______ કરે (આરામ, યોગાસન, ધર્મકથા)
૫ ______ નુ ક્યારેય નિવારણ ન થઈ શકે (મૃત્યુ, કર્મ, ખરાબ સસ્કાર)
૬ મહોપનિષદ્મા વિશિષ્ટ સદાચારને ______ જણાવેલ છે (વિચારણા, ક્રિયાયોગ, ધર્મ)

## મુનિ યશોવિજય કૃત સંસ્કૃત-હિન્દી-ગુજરાતી વ્યાખ્યાયુક્ત ગ્રંથની સૂચિ

| નામ | મૂલ્ય રૂ |
|---|---|
| ૧ **દ્વિવર્ણરત્નમાલિકા** - મૂલકાર :- શ્રીપુણ્યરત્નસૂરિજી મ<br>મૂલ + સંસ્કૃત ટીકા + ગુજરાતી ભાવાનુવાદ | ૦૦-૦૦ |
| ૨ **ન્યાયાલોક** - કર્તા :- મહોપાધ્યાય યશોવિજયજી ગણિવર<br>મૂલ + ભાનુમતી (નવ્ય સંસ્કૃત ટીકા) + પ્રતિદાયિની (ગુજરાતી વ્યાખ્યા) | ૧૭૦-૦૦ |
| ૩ **ભાષારહસ્ય** - કર્તા :- મહોપાધ્યાય યશોવિજયજી ગણિવર<br>મૂલ + સ્વોપજ્ઞવિવરણ + મોક્ષરત્ના (અભિનવ સંસ્કૃત ટીકા) + કુસુમામોદા (હિન્દી વિવેચના) | ૧૬૦-૦૦ |
| ૪ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (પ્રથમ ખંડ)<br>મૂલકાર :- કલિકાલસર્વજ્ઞ શ્રી હેમચન્દ્રસૂરિશ્વરજી મહારાજ<br>મધ્યમ-સ્યાદ્વાદરહસ્યકર્તા - મહોપાધ્યાય યશોવિજયજી ગણી<br>મૂલ + સંસ્કૃત વિવરણ + જયલતા (નૂતન સંસ્કૃત ટીકા) + રમણીયા (હિન્દી વ્યાખ્યા) | ૧૫૦-૦૦ |
| ૫ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (દ્વિતીય ખંડ) | ૧૪૫-૦૦ |
| ૬ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (તૃતીય ખંડ) | ૧૪૦-૦૦ |
| ૭ **વાદમાલા** - કર્તા :- મહોપાધ્યાય યશોવિજયજીગણી<br>મૂલ + હેમલતા (નૂતન સંસ્કૃત ટીકા) + વલ્લભા (હિન્દી વ્યાખ્યા) | ૧૨૦-૦૦ |
| ૮ **ષોડશક** (ભાગ-૧) - મૂલકાર :- શ્રી હરિભદ્રસૂરિશ્વરજી મહારાજ<br>યોગદીપિકાકાર :- મહોપાધ્યાય શ્રી યશોવિજયજી ગણિવર્ય<br>મૂલ + યોગદીપિકા + કલ્યાણકંદલી (અર્વાચીન સંસ્કૃત ટીકા) + રતિદાયિની (ગુજરાતી વ્યાખ્યા) | ૧૦૦-૦૦ |
| ૯ **ષોડશક** (ભાગ-૨) | મુદ્રલાયસ્થ |
| ૧૦ **અધ્યાત્મોપનિષત્** <br>મૂલ + અધ્યાત્મવૈશારદી (અદ્યતન સંસ્કૃત ટીકા) + અધ્યાત્મપ્રકાશ (ગુજરાતી વિવેચન) | મુદ્રલાયસ્થ |

**-: પ્રાપ્તિ સ્થાન :-**

**દિવ્ય દર્શન ટ્રસ્ટ**, ૩૬, કલિકુંડ સોસાયટી, ધોળકા, PIN - 387810

<u>સૂચના :- જ્ઞાનનિધિ દ્વારા પ્રકાશિત થયેલ ઉપરોકત ગ્રંથ અધ્યયનશીલ સાધુ-સાધ્વીજી ભગવતોને ભેટ રૂપે મળી શકશે</u>

**चतुर्दशं योगभेदषोडशकम्**

आमूलमिद योगमार्गस्य' (१३/१६) इत्युक्तम् । तत्र कतिविधो योग इत्याह —> **'सालम्बन'** इत्यादि ।

**सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । जिनरूपध्यान खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥१४/१॥**

सह आलम्बनेज चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्तत इति **सालम्बन , निरालम्बनश्च** आलम्बनात् विषय-भावापत्तिरूपात् निष्क्रान्त , यो हि छद्मस्थेन ध्यायते न च स्वरूपेण दृश्यते, **योग** = ध्यानविशेष **पर** = प्रधानो **द्विधा ज्ञेय** । जिनरूपस्य समवसरणस्थस्य ध्यान = चिन्तन **खलु**शब्दो वाक्यालङ्कारे **आद्य** = प्रथमो **योग**

**कल्याणकन्दली**

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> परो योग सालम्बनो निरालम्बनश्च द्विधा ज्ञेय । जिनरूपध्यान खलु आद्य , अपर. तु तत्तत्त्वग ॥१४/१॥ इय कारिका **योगविंशिकावृत्त्यादौ** [यो वि १९] समुद्धृता । **प्रतिमादिना वर्तत** इति **सालम्बनः** योगो रूपस्थध्यानपदेनाप्युच्यते । तदुक्त **योगशास्त्रे** —> जिनेन्द्रप्रतिमारूपमपि निर्मलमानस । निर्निमेषदृशा ध्यायन्, रूपस्थ-ध्यानवान् भवेत् ॥ <— [९/१०] इति । प्रशस्तालम्बनेन मन प्रशस्त कार्यमित्युपदेश. । तदुक्त **अध्यात्मसारे** —> आलम्बनै प्रशस्तैः प्रायो भाव· प्रशस्त एव यत । इति सालम्बनयोगी मन शुभालम्बन दध्यात् ॥ <— [२०/१५] इति । **श्रीश्रीपालकथा-या श्रीरत्नशेखरसूरिभिरपि** —> भावो वि मणोविसओ मण च अइदुज्जय निरालब । तो तस्स नियमणत्थ कहिय सालबण झाण ॥२१॥ <— इत्युक्तम् । **निरालम्बनश्च** योगो रूपातीतध्यानपदेनोच्यते, यथोक्त **योगशास्त्रे** —> अमूर्तस्य चिदानन्दरूपस्य परमात्मन । निरञ्जनस्य सिद्धस्य ध्यान स्याद्रूपवर्जितम् ॥ [१०/१] <— इति । **भास्करनन्दिनाऽपि ध्यानस्तवे** —> परमात्मान-मात्मान ध्यायतो ध्यानमुत्तमम् । रूपातीतमिद देव ! निश्चित मोक्षकारणम् ॥३६॥ <— इत्युक्तम् । अयमेव निरालम्बनयोगः **तत्त्वानुशासने नागसेनेनाऽपि** —> लोकाग्रशिखरारूढमुदूढसुखसम्पदम् । सिद्धात्मान निराबाध ध्यायेन्निर्धूतकल्मषम् ॥<— [४/३३] इत्येवमुक्त. । **भावसङ्ग्रहे तु** —> ण य चितइ देहत्थ देह च ण चितए किपि । ण सगयपरगयरूव त गयरूव णिरालब ॥ <— [६२८] इत्युक्तम् । **ज्ञानार्णवे शुभचन्द्रेणापि** —> चिदानन्दमय शुद्धममूर्त्त परमाक्षरम् । स्मरेद्यत्रात्मनात्मान तद्रूपातीतमिष्यताम् [४०/१६] इत्युक्तम् । **आलम्बनात् विषयभावापत्तिरूपात्** = चक्षुरादिज्ञानगोचरताशालिन **निष्क्रान्तः** = अतिक्रान्त । एतदेव स्पष्टयति-यो हीति । न चाऽतीन्द्रियालम्बनत्वेनायमपि सालम्बन एव स्यादित्यारेकणीयम्, अरूप्यालम्बन-स्येषदालम्बनत्वेन 'अलवणा यवागू ' इत्यत्रेवात्र नञ्पदप्रवृत्तेरविरोधात् । तदुक्त **योगविंशिकाया** —> आलबण पि एव रूवमरूवी य इत्थ परमुत्ति । तग्गुणपरिणइरूवो सुहुमो अणालबणो नाम ॥१९॥ <— इति । अरूपितत्त्वस्य ईषदालम्बनत्वादनालम्बनत्वमुक्तम् । विषयतामात्रेण तस्याऽऽलम्बनत्वमनूद्यापि तद्विषययोगस्येषदालम्बनत्वमेव प्रासाधीति फलतो न कश्चिद्विशेष इति स्मर्तव्यम् । **योगः** = ध्यानविशेषः अध्यात्मभावनायोगापेक्षया **प्रधानो द्विधा ज्ञेय** इति । प्रकृतसालम्बन-निरालम्बनयोगावेव परै. सगुण-निर्गुणध्यानतयेष्यते । तदुक्त **शाण्डिल्योपनिषदि** —> अथ ध्यानम् । तद् द्विविध सगुण निर्गुणश्चेति । सगुण मूर्तिध्यानम् ।

## ❀ રતિદાયિની ❀

'સિદ્ધાન્તકથા વગેરે યોગમાર્ગનુ મૂળભૂત કારણ છે' - આવુ ૧૩ મા ષોડશકમા કહ્યુ 'યોગમાર્ગનો ઘટક યોગ કેટલા પ્રકારનો છે ?' આ શકાનુ સમાધાન કરવા મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** ·- પ્રધાન યોગ બે પ્રકારનો જાણવો - આલબન અને નિરાલબન જિનરૂપધ્યાન એ પ્રથમ = સાલબન યોગ છે જિનસ્વભાવગામી અપર = બીજો = નિરાલબન યોગ જાણવો [૧૪/૧]

## ☰ સાલંબન અને નિરાલંબન યોગ ☰

**ટીકાર્થ** ·- આલબન સહિત જે યોગ હોય તે સાલબન યોગ જાણવો આલબનશબ્દનો અર્થ છે ચક્ષુ વગેરે ઈંદ્રિયથી ઉત્પન્ન થનાર ચાક્ષુષ વગેરે પ્રત્યક્ષનો વિષય બનનાર પ્રતિમા વગેરે ચાક્ષુષાદિ પ્રત્યક્ષની વિષયતાની પ્રાપ્તિ જેમા છે તેવા પ્રતિમાદિસ્વરૂપ આલબનથી નીકળી ગયેલ હોય અર્થાત્ આલબનરહિત હોય તે નિરાલબનયોગ જાણવો મતલબ કે જે છદ્મસ્થ જીવ વડે ધ્યાન ધરાય પરતુ સ્વરૂપથી ચક્ષુ વગેરે દ્વારા ન દેખાય તેવો યોગ અર્થાત્ ધ્યાનવિશેષ આ બન્ને યોગ પ્રધાન જાણવો [અધ્યાત્મ-ભાવનાસ્વરૂપ યોગની અપેક્ષાએ ધ્યાનયોગ પ્રધાન જાણવો ] આમ આ ધ્યાનયોગ બે પ્રકારનો જાણવા સમવસરણમા બેઠેલા જિનેશ્વર-તીર્થંકરદેવના રૂપનુ ધ્યાન-ચિતન કરવુ તે પ્રથમ સાલબન યોગ છે મૂળ ·. ુ' પદ વાક્યની શોભા માટે છે.

सालम्बन । तस्यैव जिनस्य तत्त्व = केवलजीवप्रदेशसङ्घातरूप केवलज्ञानादिस्वभाव तस्मिन् गच्छतीति तत्तत्त्वग तु एवकारार्थे, अपर = द्वितीय, शुद्धपरमात्मगुणध्यान निरालम्बनमित्यर्थ ॥१४/१॥

कथ पुनर्जिनरूप ध्यातव्यम् ? इत्याह -> 'अष्टे'त्यादि ।

अष्टपृथग्जनचित्तत्यागाद्योगिकुलचित्तयोगेन । जिनरूप ध्यातव्य योगविधावन्यथा दोषः ॥१४/२॥

अष्ट च तानि पृथग्जनचित्तानि = अयोगिजनमनांसि तेषा त्यागात् योगिकुलस्य = योगिपारम्पर्यस्य चित्त = मन तद्योगेन = तदभ्युपगमेन जिनरूप = परमात्मस्वरूप **ध्यातव्य योगविधौ** = ध्यानाचारे **अन्यथा दोष** = अपराध, निरपेक्षवृत्तौ मानसातिचारस्यापि भङ्गरूपत्वात् ॥१४/२॥

कल्याणकन्दली

निर्गुणमात्मतादात्म्यम् <- [१/८/१०]। निर्गुणत्वञ्चौदयिकादिभावापेक्षयाऽवगन्तव्यम् । योगव्याख्या च विष्णुपुराणे -> आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगति । तस्या ब्रह्मणि सयोगो 'योग' इत्यभिधीयते ॥ <- [ ] इत्येवमुक्ता ।

योगस्यैव कर्मक्षये विशिष्टसामर्थ्यम् । तदुक्त मोक्षधर्मे -> नास्ति योगसम बलम् <- [३१६/२] । प्रारब्धकर्मवैफल्यमपि योगफलतया परेषामभीष्टम् । तदुक्त योगवार्तिके विज्ञानभिक्षुणा -> योगद्वयेनाखिलसंस्कारक्षये भोगसंस्काराख्यसहकार्यभावात् प्रारब्ध कर्माऽपि यत्फलाक्षम भवति । इदमपि योगफलम् <- [यो सू १/२ योगवा पृ ५] इति ॥१४/१॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> अष्टपृथग्जनचित्तत्यागात् योगिकुलचित्तयोगेन जिनरूप ध्यातव्य, अन्यथा योगविधौ दोष ॥१४/२॥

निरपेक्षवृत्तौ = आज्ञाऽनपेक्षयोगप्रवृत्तौ तु मानसातिचारस्यापि = मनोमात्रजन्यस्यापि अतिचारस्य निश्चयनयतो भङ्गरूपत्वात् = असङ्गानुष्ठानभ्रंशस्वरूपत्वात्, असङ्गध्यानयोगपरिणामविरहात् । योग-व्रत-सदनुष्ठान-ध्यानादिप्रवृत्ता आज्ञासापेक्षाया वचनानुष्ठानरूपाया योगादिपरिणामोपधानव्याप्याया अनाभोग-शक्तिवैकल्यादिना जायमानस्य वैगुण्यस्य तत्त्वतोऽतिचाररूपतेव, व्यवहारनयत तदानीं वचनानुष्ठानस्याऽभग्नत्वात् । यद्वोपवास-प्रतिलेखन-प्रतिक्रमण-प्रमार्जन-पूजन-विहारादिबाह्ययोगस्य शरीरस्वास्थ्य-देश-कालादिसापेक्षतया विधिपरतायामप्यनाभोगादिना तद्वैकल्यस्यातिचाररूपता व्यवहारनयतोऽभिमता । सिद्धस्य तात्त्विकध्यानयोगस्य बाहुल्येन देहसौष्ठव-क्षेत्र-समयाद्यनपेक्षतया तत्र मानसातिचारस्याऽपि भङ्गरूपतेव, तस्य स्वापराधप्रयुक्तत्वात् ।

તે જ જિનેશ્વરના કેવલજ્ઞાનાદિસ્વભાવવાળા કેવલ જીવના પ્રદેશોના સંઘાત = સમૂહસ્વરૂપ તત્ત્વને અનુસરનાર એવુ શુદ્ધપરમાત્મગુણધ્યાન એ બીજો નિરાલંબન યોગ જાણવો [૧૪/૧]

<u>વિશેષાર્થ</u> :- જિનપ્રતિમાનુ ધ્યાન કે આંખ બંધ કરીને સમવસરણસ્થ તીર્થંકરને મુખ્ય કરીને તેમનુ અદ્ભુત રૂપ, અષ્ટપ્રાતિહાર્ય વગેરેનુ ધ્યાન એ સાલંબન ધ્યાન = યોગ છે પરમાત્માના કેવલજ્ઞાનાદિ શુદ્ધ ગુણોનુ ધ્યાન, પરમાણુદ્રવ્ય-ગુણ-પર્યાયનુ ધ્યાન વગેરે અરૂપી તત્ત્વવિષયક ધ્યાન નિરાલંબન યોગ કહેવાય છે અહીં એ પણ ખ્યાલમા રાખવુ કે યોગબિંદુ [ગા ૩૧ તથા ૩૫૮ થી ૩૬૭] ગ્રંથમા અધ્યાત્મ, ભાવના, ધ્યાન, સમતા અને વૃત્તિસંક્ષય - આમ પાચ પ્રકારના યોગ બતાવેલ છે કે જે ઉત્તરોત્તર ચઢિયાતા છે અધ્યાત્મ અને ભાવના યોગની અપેક્ષાએ ધ્યાનયોગ પ્રધાન હોવાથી સાલંબન ધ્યાન અને નિરાલંબન ધ્યાન આ બન્નેને પ્રસ્તુતમા પ્રધાન કહેલ છે [૧૪/૧]

જિનરૂપનુ ધ્યાન કેવી રીતે કરવુ ? આનો જવાબ આપતા ગ્રંથકારશ્રી કહે છે કે —

<u>ગાથાર્થ</u> :- સામાન્ય માણસોના આઠ પ્રકારના ચિત્તને છોડી યોગીકુલના ચિત્તને સ્વીકારીને જિનરૂપનુ ધ્યાન ધરવુ, બાકી ધ્યાનના આચારમા દોષ લાગે [૧૪/૨]

<u>ટીકાર્થ</u> - પૃથગ્જન = યોગીથી પૃથગ્જન = અયોગી લોકોના આઠ પ્રકારના મનનો ત્યાગ કરીને યોગીની પરપરાના મનને સ્વીકારીને પરમાત્માના સ્વરૂપનુ ધ્યાન ધરવુ જોઈએ બાકી ધ્યાનના આચારમા દોષ લાગે, કારણ કે નિરપેક્ષવૃત્તિમા = ધ્યાનયોગમા માનસિક અતિચાર પણ ભગસ્વરૂપ છે [૧૪/૨]

<u>વિશેષાર્થ</u> - ઉપવાસાદિ પચ્ચખાણ, પૂજા, વ્રતપાલન, પડિલેહણ, પ્રમાર્જન, લોચ, વિહાર વગેરે બાહ્ય યોગો શરીરસ્વાસ્થ્ય, દેશ, કાળ, સાધનસામગ્રી વગેરેને સાપેક્ષ પ્રવૃત્તિ સ્વરૂપ હોવાથી તેની ત્રુટિ, સ્ખલના, ન્યૂનતા વગેરેના કારણે, વિધિસાપેક્ષ રહેવા છતા, કાયિક-વાચિક-માનસિક નાનો દોષ લાગે તો તે તે બાહ્ય યોગોનો ભગ નથી કહેવાતો, પણ અતિચાર કહેવાય છે પરતુ તાત્ત્વિક ધ્યાન વગેરે યોગો નિરપેક્ષપ્રવૃત્તિસ્વરૂપ છે અર્થાત્ બાહ્ય સાધનસામગ્રીથી મુખ્યતયા નિરપેક્ષ છે માટે જ તેમા માનસિક અતિચાર પણ લાગે તો ધ્યાનભગ કહેવાય છે ધ્યાનમા લાગતો માનસિક અલ્પ દોષ બાહ્યસામગ્રીવિકલ્યાદિપ્રયુક્ત નથી પરતુ સ્વાપરાધપ્રયુક્ત છે વળી, બીજી વાત એ પણ છે કે ઉપવાસાદિ પચ્ચખાણ, પૂજા, પડિલેહણ વગેરે પ્રવૃત્તિ મુખ્યતયા વ્યવહાર નયનો વિષય છે જ્યારે તાત્ત્વિક ધ્યાન એ નિશ્ચય નયનો મુખ્યતયા વિષય કહેવાય વ્યવહાર નયમા અલ્પ દોષસ્વરૂપ અતિચારનો

तान्येव त्याज्यान्यष्टौ चित्तान्याह –> 'खेदे'त्यादि ।

**खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगाऽऽसङ्गैः । युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान् ॥१४/३॥**

(१) खेद = पथि परिश्रान्तवत् पूर्वक्रियाप्रवृत्तिजनित उत्तरक्रियाप्रवृत्तिप्रतिबन्धक दुःखम्-। (२) उद्वेग = कष्टसाध्यताज्ञानजनितमालस्य, यद्वशात् कायखेदाभावेऽपि स्थानस्थितस्यैव क्रिया कर्तुमनुत्साहो जायते, कुर्वाणोऽपि ततो न सुख लभते । (३) क्षेप = अन्तराऽन्तराऽन्यत्र चित्तन्यास । (४) उत्थान = चित्तस्याऽप्रशान्तवाहिता, मदनप्रभृतीनामुद्रेकान्मदावष्टब्धपुरुषवत् । (५) भ्रान्ति = अतस्मिंस्तद्ग्रहरूपा, शुक्तौ रजताध्यारोपवत् । (६) अन्यमुत् = प्रकृतकार्यान्यकार्यप्रीति । (७) रुग् = रोग पीडा भङ्गो वा । (८) आसङ्ग = प्रकृतानुष्ठाने

कल्याणकन्दली

इदश्चाखण्डैकाकारपदार्थग्राहकशुद्धनिश्चयनयानुरोधेनोक्तम् । अत एवाष्टादशसहस्रशीलाङ्गरथोऽविकल एवाभ्युपगम्यते निश्चयेन, तद्वैकल्यस्याऽपि तद्भङ्ग एव पर्यवसानात् । निश्चयतो योगस्याखण्डचित्तपरिणामरूपतयैव नैश्चयिकप्रत्याख्यानात्मके सर्वविरति-प्रत्याख्यानेऽपवादाऽऽगारादिक नैवाऽङ्गीक्रियते, अन्यथा तादृशाखण्डपरिणामसम्पादनानुकूलोत्साहभङ्गापातात् । कालग्रहणादिविधि-रप्येतादृक्षनिश्चयानुगृहीतव्यवहारनयेनावसेय इति दिक् ॥१४/२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> मतिमान् खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गै युक्तानि हि चित्तानि प्रबन्धतो वर्जयेत् ॥१४/३॥ इयञ्च कारिका **सार्धशतत्रयप्रमितसीमन्धरस्वामिस्तवनटिप्पणक** - [१०/१२] **योगभेदद्वात्रिंशिकावृत्ति**-[द्वा द्वा. १८/१२]**योगदृष्टिसमुच्चयवृत्त्यादौ** [गा.१६] समुद्धृता वर्तते ।

[१] **खेदः = पूर्वक्रियाप्रवृत्तिजनित उत्तरक्रियाप्रवृत्तिप्रतिबन्धक दुःखम्** । न हि श्रान्ते शरीरे क्लान्ते च चेतसि सत्प्रवृत्त्यौपयिक दार्ढ्य सम्भवति । तद्विरहे च कथ प्रणिधानादिगर्भा सत्प्रवृत्ति सम्भवेत् । यथोक्त **वाल्मीकेन रामायणे** –> शरीरस्य भवेत् खेद कस्तत् कर्म समाचरेत् <– [अरण्यकाण्ड-५०/१९] । ततश्च कृषिकर्मणि वारिवत् सत्कर्मणि प्रणिधानमावश्यकमिति ध्वन्यते । **स्थानस्थितस्यैव** = अविद्यमानाऽऽयासस्य, एवकारोऽयोगव्यवच्छेदार्थ । **न सुख लभते**, उत्साहस्य तत्कारणत्वात् । **अनेन** –> अनिर्वेद पर सुख <– [सुदरकाण्ड-१२/१०] इति **वाल्मीकीरामायणवचनमपि**

સ્વીકાર છે જ્યારે નિશ્ચય નયના મતે અતિચાર હોતા જ નથી કા તો ધ્યાન કા તો ધ્યાનભગ સદોષ ધ્યાન એ નિશ્ચય નયને માન્ય નથી નિશ્ચય નયથી વસ્તુ અખડ હોય છે, સખડ નહિ સખડ વસ્તુ એ અવસ્તુ છે નિરશ-અખડ-એકાકાર વસ્તુને માનનાર નિશ્ચય નયના મતે અતિચાર નથી, તેમ આગાર-અપવાદ-છૂટછાટ પણ નથી માટે જીવનપર્યંત પ્રામાણિક પ્રણિધાનસ્વરૂપ સર્વવિરતિ દીક્ષાર્થીને ઉચ્ચરાવવામા આવે છે ત્યારે સામાયિક સૂત્રમા પણ કોઈ આગાર વગેરે રાખવામા આવેલ નથી જો આગાર-અપવાદ-છૂટછાટપૂર્વક 'કરેમિ ભતે' સૂત્ર સાધુને ઉચ્ચરાવવામા આવે તો સર્વવિરતિપરિણામ-સર્વવિરતિપ્રણિધાન અખડના બદલે સખડ બની જવાથી સર્વવિરતિ = સર્વથા સર્વદા સર્વત્ર વિરતિપ્રણિધાન જ ખડિત થઈ જાય સર્વવિરતિપરિણતિ આત્મસાત્ થવાનો ઉલ્લાસ મદ-હીન-નિસ્તેજ બની જાય સાધુ ભગવતો અપવાદમાર્ગે નદી ઉતરે ત્યારે પણ તેમનો સર્વપાપવિરતિપ્રણિધાન તો અખડ જ હોય છે તે વખતે વ્યવહાર ચારિત્રમા અતિચાર લાગવા છતા પણ નૈશ્ચયિક સર્વવિરતિપરિણામધારા અખડ-અસ્ખલિત જ રહે છે નિરતિચાર-અખડ-અભાગ એવા ધ્યાન યોગના પુરસ્કર્તા નિશ્ચય નયને અભિમુખ એવા વ્યવહાર નયથી પ્રદર્શિત અનુષ્ઠાન તરીકે કાલગ્રહણ, સજ્જાય પઠવવાની [સ્વાધ્યાયપ્રસ્થાપનની] વિધિ, કાલ પવેવવાની [કાલપ્રવેદનની] વિધિ વગેરે ગણી શકાય, કે જેનો અભ્યાસ-પાલન-સ્વીકાર હાલમા પણ યોગોદ્વહનમા [જોગમા] સાધુ ભગવતો કરે છે ઇતિ દિક્ [૧૪/૨]

છોડવા યોગ્ય તે જ આઠ અયોગીચિત્તને ગ્રથકારશ્રી બતાવે છે

**ગાથાર્થ** - બુદ્ધિશાળીએ [૧]ખેદ, [૨]ઉદ્વેગ, [૩]ક્ષેપ, [૪]ઉત્થાન, [૫]ભ્રાન્તિ, [૬]અન્યમુદ્, [૭]રોગ, [૮]આસગ દોષોથી યુક્ત એવા ચિત્તને પ્રવાહથી [સાનુબધ રીતે] છોડવા જોઈએ [૧૪/૩]

## ⋙ આઠ દોષને છોડીએ ⋘

**ટીકાર્થ** - [૧] ખેદ = માર્ગમા થાકેલાની જેમ પૂર્વ ક્રિયાની પ્રવૃત્તિથી ઉત્પન્ન થયેલ એવુ ઉત્તરકાલીન ક્રિયાની પ્રવૃત્તિમા પ્રતિબધક દુ ખ-થાક [૨] ઉદ્વેગ =કષ્ટસાધ્યતાનુ જ્ઞાન થવાથી ઉત્પન્ન થયેલ આળસ કે જેના કારણે કાયિક ખેદ ન હોવા છતા સ્થાને બેઠા બેઠા જ ક્રિયાને કરવાનો અનુત્સાહ થાય છે અને કરવા છતા પણ મજા ન આવે [૩] ક્ષેપ = વચ્ચે વચ્ચે મન બીજે જાય [૪] ઉત્થાન = કામ વગેરેના ઉદ્રેકથી-આવેગથી મત્ત થયેલ પુરુષની જેમ ચિત્તની અપ્રશાતવાહિતા [૫] ભ્રાન્તિ = છીપમા ચાદીના આરોપની જેમ તેના અભાવમા તેનો ભ્રમ અર્થાત્ ક્રિયામા કર્યા કે ન કર્યાનો ભ્રમ [૬] અન્ય મુદ્ = પ્રસ્તુત કાર્યને મૂકી અન્ય કાર્યમા પ્રીતિ [૭] રોગ = ચિત્તની પીડા કે મનોભગ [૮] આસગ = વિહિત એવા અન્ય અનુષ્ઠાનમા જે પ્રેમ હોય તે કરતા પ્રસ્તુત-વિવક્ષિત અનુષ્ઠાનમા અતિઆસક્તિ આ આઠ દોષથી યુક્ત એવા આઠ ચિત્તનો પ્રવાહથી-સાનુબધ

विहितेतरानुष्ठानप्रीत्यतिशयितप्रीति । एतै युक्तानि हि = समवद्धानि हि चित्तानि अष्ट प्रबन्धत = प्रवाहेन वर्जयेत् = परिहरेत् मतिमान् = बुद्धिमान् ॥१४/३॥

उक्तानेव खेदादींश्चित्तदोषान् फलद्वारा विवृण्वन्नाह –> 'खेद'इत्यादि ।

खेदे दार्ढ्याऽभावान्न प्रणिधानमिह सुन्दर भवति । एतच्चेह प्रवर कृषिकर्मणि सलिलवज्ज्ञेयम् ॥१४/४॥

खेदे चित्तदोषे सति दार्ढ्याभावात् = क्रियासमाप्तिव्यापिस्थैर्याऽभावात् न प्रणिधान = ऐकाग्र्य इह = प्रस्तुते योगे सुन्दर = प्रधान भवति । एतच्च प्रणिधान इह = योगे प्रवर = प्रधान = फलासाधारणकारणमित्यर्थ, कृषिकर्मणि = धान्यनिष्पत्तिफले सलिलवत् = जलवत् ज्ञेयम् ॥१४/४॥

उद्वेगे विद्वेषाद्विष्टिसम करणमस्य पापेन । योगिकुलजन्मबाधकमलमेतत्तद्विदामिष्टम् ॥१४/५॥

कल्याणकन्दली

व्याख्यातम्, कार्य-कारणयोरभेदोपचारात् । ततश्चोत्साहो जनयितव्य इति उपदेश । तदुक्त वाल्मीकीरामायणे –> उत्साहवन्त पुरुषा नावसीदन्ति कर्मसु <– [किष्किन्धाकाण्ड-१/१२२] । पञ्चतन्त्रे विष्णुशर्मणापि –> अनिर्वेद श्रियो मूलम् <– [१/३५९] इति प्रोक्तम् । शिष्ट स्पष्टमविकञ्च वक्ष्यते तत्तद्दोषनिरूपणे ॥१४/३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> खेदे दार्ढ्याभावात् इह सुन्दर प्रणिधान न भवति । एतच्च कृषिकर्मणि सलिलवत् प्रवर ज्ञेयम् ॥१४/४॥ इय कारिका योगभेदद्वात्रिंशिकावृत्तौ [द्वा द्वा १८/१३] समुद्धृता । एतदनुसारेण योगभेदद्वात्रिंशिकाया –> प्रवृत्तिज क्लम खेदस्ततो दार्ढ्य न चेतस । मुख्यो हेतुरदश्चात्र कृषिकर्मणि वारिवत् ॥१३॥ <– इत्युक्तम् । क्रियासमाप्तिव्यापिस्थैर्याभावात् = सत्क्रियापूर्णता यावत् स्थैर्यस्याऽयोगात् न प्रस्तुते योगे प्रधान ऐकाग्र्य भवति, प्रवृत्तिजन्यस्य मानसदु खानुबन्धिन खेदस्य तद्विघटकत्वात् । अत खेददोषपरिहाराय स्वोचितकर्तव्ये प्रेम कर्तव्यम् । तदुक्त प्रेमगीताया –> मत्कर्तव्योपरि प्रेम कर्तव्य शुद्धरागिभि । यत्र प्रेम भवेत् तत्र चित्तैकाग्र्य प्रजायते ॥ <– [५१२] इति ।

प्रणिधान योगे फलासाधारणकारणम् । प्रणिधानलिङ्ग तु यथाशक्तिक्रियादि, यथोक्त –> विशुद्धभावनासार तदर्थार्पितमानसम् । यथाशक्तिक्रियालिङ्ग प्रणिधान मुनिर्जगौ ॥ <– स्वल्पकालमपि शोभनमिद [= प्रणिधान], सकलकल्याणाऽऽक्षेपादिति [पृ ११६] व्यक्त ललितविस्तरायाम् । योगदृष्टिसमुच्चये प्रथमदृष्टौ खेदत्याग उक्त इति ध्येयम् ॥१४/४॥

રીતે બુદ્ધિશાળીએ ત્યાગ કરવો જોઈએ [૧૪/૩]

**વિશેષાર્થ** .- ઉપરોક્ત ખેદ વગેરે આઠ દોષ ચિત્તને મલિન, અસ્થિર કરે છે, કે ઉન્નતિ કરવા માટે અસમર્થ કરી દે છે માટે શુદ્ધ, સ્થિર, સમર્થ ચિત્તે દરેક ધર્મક્રિયા કરવા માટે આ આઠ દોષને ટાળવાના છે [૧૪/૩]

ઉપરોક્ત ખેદ વગેરે ચિત્તદોષનુ જ ફલ દ્વારા વિવેચન કરતા ગ્રથકારશ્રી જણાવે છે કે —

**ગાથાર્થ** ·- ખેદ હોતે છતે દઢતા ન રહેવાથી યોગમા સુદર પ્રણિધાન થનુ નથી જેમ ખેતીક્રિયામા પાણી પ્રધાન છે તેમ આ પ્રણિધાન અહીં યોગમા પ્રધાન જાણવુ [૧૪/૪]

## ❖ ધર્મક્રિયામાં ખેદને ટાળીએ ❖

**ટીકાર્થ** :- ખેદ નામનો ચિત્તનો દોષ હોતે છતે ક્રિયા પૂર્ણ થાય ત્યા સુધી ટકનારી સ્થિરતા ન રહેવાના કારણે પ્રસ્તુત યોગમા પ્રણિધાન-એકાગ્રતા પ્રધાન બનતી નથી અહીં યોગમા પ્રણિધાન તો ફલ પ્રત્યે અસાધારણ કારણ છે જેમ કે ધાન્યનિષ્પત્તિફલક કૃષિક્રિયામા પાણી ફલ પ્રત્યે અસાધારણ = પ્રધાન કારણ છે તેમ ઉપરનુ સમજવુ [૧૪/૪]

**વિશેષાર્થ** ·- જેમ લાબો માર્ગ કાપીને મુસાફર થાકી જાય અને ત્યાર બાદ આગળ ચાલવા માટે ઉત્સાહી ન રહે તેમ પૂર્વકાલીન ધર્મક્રિયાની પ્રવૃત્તિથી થાક લાગતા પછીની ક્રિયા કે ધ્યાનમા પ્રવૃત્તિ કરવાને આત્મામા ઉત્સાહ ન થાય, ખેદ હોય, ખિન્નતા હોય આમ ખિન્ન થયેલુ ચિત્ત પછીથી ધ્યાન કે ક્રિયામા દૃઢ બનતુ નથી તેથી ત્યા પ્રણિધાન-એકાગ્રતા-તન્મયતા થવામા અવરોધ ઉભો થાય છે પ્રણિધાન વિના તો ચાલી શકે તેમ છે જ નહિ કેમ કે જેમ ધાન્યને નિષ્પન્ન કરે તેવી ખેતીમા પાણી જરૂરી છે તેમ દરેક ધર્મસાધનામા પ્રણિધાન જરૂરી છે ખેદના લીધે તન્મયતાનો રગ આવે નહિ પછી ક્રિયા કે ધ્યાન કરે તો પણ શુભ અધ્યવસાય ક્યાથી વિકસ્વર થવાના ? જો શુભ અધ્યવસાય કમાવવા હોય તો જેમ વેપારી લાભ કરાવનાર આડતિયાની સરભરા બરાબર ઉત્સાહ-ઉલ્લાસ-ઉમગથી કરે છે તેમ મહાન શુભ અધ્યવસાયનો લાભ કરાવનારી ક્રિયાની ઉપાસના બરાબર રગેચગે ઉલ્લાસથી કરવી જોઈએ ત્યા ખિન્નતા શા માટે ? રોતા રોતા ક્રિયા થાય એમા લાખનો માલ પાચ રૂપિયામા લીલામ કરવાની મુર્ખાઈ થાય બુદ્ધિમાન આવુ ન કરે સીમધરસ્વામીના ૩૫૦ ગાથાના સ્તવનમા ઉપાધ્યાયજી મહારાજે જણાવેલ છે કે –> ક્રિયામા ખેદે કરી રે, દઢતા મનની નાહિ રે, મુખ્ય હેતુ તે ધર્મમા રે, જિમ પાણી કૃષિમાહિ રે <– યોગદષ્ટિસમુચ્ચયમા પ્રથમ મિત્રાદષ્ટિમા ખેદ દોષનો ત્યાગ જણાવેલ છે [૧૪/૪]

प्रसङ्गात् । वैशेषिकगुणरहित इति वाग्भङ्ग्या कथञ्चिन्निर्गुणमुक्तिपक्ष आदृत, सर्वथा निर्गुणमुक्तिपक्षस्तु वेदान्त्यादीनामपास्त ॥१६/३॥

अस्या वस्तुसत्यामवस्थाया तन्त्रान्तरोक्त सम्भवित्वेन दर्शयन्नाह –> एवमि'त्यादि ।

**एव पशुत्वविगमो दुःखान्तो भूतविगम इत्यादि । अन्यदपि तन्त्रसिद्ध सर्वमवस्थान्तरेऽत्रैव ॥१६/४॥**

**एव** = उक्तनीत्या पशुत्व = अज्ञत्व तस्य विगम = अपुनर्भावेन नाश, दुःखानामन्त, भूताना पृथिव्यादीना विगम = आत्यन्तिको वियोग **इत्यादि अन्यदपि** = उक्तावशिष्टमपि **तन्त्रसिद्ध** = तत्तत्समयप्रसिद्ध **सर्व** = निरवशेष **अवस्थान्तरे** = दोपरहितशुद्धगुणावस्थारूपे **अत्रैव** = परतत्त्वस्वरूपे युज्यते, नान्यत्र ॥१६/४॥

एतच्च सर्वमपि तन्त्रान्तरसिद्ध यथाविधवस्तुतत्त्वाभ्युपगमे युज्यते तादृश वस्तु परीक्षयन्नाह –> **'परिणामिनी'**-त्यादि ।

**परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिल स्यात् । अर्थान्तरे च तत्त्वेऽविद्यादो वस्तुसत्येव ॥१६/५॥**

केनचिद्रूपेणान्वयित्वे सति केनचिद्रूपेण व्यतिरेकित्व = परिणाम । स विद्यते यस्य स परिणामी, तस्मिन्

## कल्याणकन्दली

'वैशेषिकगुणरहित' इति वाग्भङ्ग्या कथञ्चिन्निर्गुणमुक्तिपक्ष' = औपाधिकगुणोच्छेदात्मकमोक्षपक्ष आदृतः । सर्वथा = एकान्तेन = औपाधिक-स्वाभाविकादिसर्वापेक्षया निर्गुणमुक्तिपक्ष तु वेदान्त्यादीना = वेदान्ति-नैयायिक-वैशेषिक-मीमांसकादीना अपास्तः ममानाऽऽयव्ययत्वेन मुक्तिपरिश्रमस्य वैयर्थ्यापत्ते, गुणहानेरनिष्टत्वाच्च । तदुक्त –> दुःखाभावोऽपि नाऽवेद्यः पुरुषार्थतयेष्यते । न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥[ ] <– इत्यधिक मत्कृत-भानुमत्याम् [न्यायालोकटीका-प्रथमप्रकाशे पृ ३४] ॥१६/३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> एव पशुत्वविगम दुःखान्त भूतविगम इत्यादि अन्यदपि तन्त्रसिद्ध सर्व अवस्थान्तरे अत्रैव, युज्यत इति शेष ॥१६/४॥ स्पष्टार्थैव योगदीपिका ॥१६/४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> आत्मनि परिणामिनि सति अर्थान्तरे च तत्त्वे अविद्यादौ वस्तुसति एव तत्तद्ध्वनिवाच्य एतत् अखिल स्यात् ॥१६/५॥

केनचिद्रूपेण = ध्वसप्रतियोगितानवच्छेदकधर्मवत्त्वेन अन्वयित्वे = उत्तरकालवृत्तित्वे सति केनचिद्रूपेण = ध्वसप्रतियोगितावच्छेदकधर्मवत्त्वेन व्यतिरेकित्व परिणाम इति । यत्तु योगसूत्रभाष्ये व्यासेन –> अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ

વૈશેષિક ગુણરહિત = અશુદ્ધ જ્ઞાનાદિગુણથી રહિત મુક્તિ છે એવા પ્રકારનુ કહેવાથી કથચિત્ = અશુદ્ધ ગુણોની અપેક્ષાએ નિર્ગુણ મુક્તિ પક્ષનો સ્વીકાર થયો અને વેદાતીઓને માન્ય સર્વથા = એકાતે નિર્ગુણમુક્તિપક્ષનુ નિરાકરણ થયુ [૧૬/૩]

વાસ્તવિક આ જ અવસ્થામા અન્ય દર્શનોક્ત વસ્તુ સભવી શકે છે એવુ જણાવતા ગ્રથકારશ્રી કહે છે કે –

**ગાથાર્થ** :- આ રીતે પશુત્વનો નાશ, દુ ખનો અન્ત, ભૂતવિયોગ ઈત્યાદિ બીજુ પણ દર્શનપ્રસિદ્ધ બધુ આ જ અવસ્થામા સગત થઈ શકે છે [૧૬/૪]

## મોક્ષમાં અન્યદર્શનોક્ત વસ્તુનો સ્વીકાર

**ટીકાર્થ** - ઉપરોક્ત રીતે [૧] પશુત્વનો = અજ્ઞત્વનો નાશ, કે જે ફરીથી ક્યારેય ઉત્પન્ન ન થાય [૨] દુ ખોનો નાશ [૩] પૃથ્વી, પાણી, પવન વગેરે ભૂતનો આત્યતિક વિયોગ ઈત્યાદિ, ઉપરોક્ત સિવાયનુ પણ, તે તે દર્શનમા પ્રસિદ્ધ બધુ દોષરહિત-શુદ્ધ ગુણોની અવસ્થાસ્વરૂપ આ જ પરતત્ત્વમા સગત થઈ શકે, બીજે નહિ [૧૬/૪]

અન્ય દર્શનોમા પ્રસિદ્ધ આ બધુ ય જેવા પ્રકારના વસ્તુસ્વરૂપનો સ્વીકાર કરવામા આવે ત્યારે ઘટી શકે છે તેવા પ્રકારની વસ્તુની પરીક્ષા કરતા ગ્રથકારશ્રી કહે છે કે –

**ગાથાર્થ** - પરિણામી આત્મા અને અર્થાતરસ્વરૂપ અવિદ્યા વગેરે તત્ત્વ વાસ્તવિક જ હોય ત્યારે તે તે શબ્દોથી વાચ્ય આ બધુ ઘટી શકે [૧૬/૫]

## પરિણામી આત્માનો સ્વીકાર

**ટીકાર્થ** - કોઈક રૂપે અન્વયી - વિદ્યમાન હોય અને કોઈક રીતે અવિદ્યમાનતા સ્વરૂપ પરિણામ જેની પાસે હોય તે પરિણામી

**आत्मनि** = जीवे **सति** = अभ्युपगम्यमाने सति, मुक्तिवादिनामात्मसत्तायामविप्रतिपत्ते 'तन्नित्यत्वक्षणिकत्वादावेव विप्रतिपत्ते तन्निरासायेद विशेषणम् । तै तै ध्वनिभि = शब्दै वाच्य = अभिधेय **एतत्** = प्रागुक्त अविद्यारहिताऽवस्था-वैशेषिकगुणरहितपुरुष-पशुत्वविगमादि अथवा तै तै ध्वनिभि वाच्य सम्यग्दर्शन-ज्ञान-सदनुष्ठानादि-प्रकरणोक्त **एतत् अखिल स्यात्** = सम्भवेत् । **अर्थान्तरे च** = आत्मभिन्ने च **तत्त्वे** = पदार्थे **अविद्यादौ** = अविद्याऽ-

कल्याणकन्दली

धर्मान्तरोत्पत्तिः परिणाम. <– [पात.यो सू.३/१३ -भा पृ.२९२] इत्युक्त, तदपि द्रव्यत्व-सत्त्वादिना द्रव्यस्याऽवस्थितत्वमावेदयति । घटत्व-कपालत्व-शिवकत्वादि-पूर्वधर्मवत्त्वरूपेण द्रव्यस्याऽनवस्थितत्वानभ्युपगमे तु तत्र सङ्गच्छते, 'घटत्वेनाय मृत्पिण्ड आसीत्' इत्यत्र लङ्प्रत्ययानुपपत्तेरित्यधिक निरूपितमस्माभि. जयलतायाम् [म स्या.रहस्य प्रथम खण्ड पृ.१०] ।

**केचित्तु** प्रकृते. अन्यथाभावः परिणाम इत्याहु. । उपादानसलक्षणत्वे सत्यन्यथाभाव. परिणाम इत्यन्ये । पूर्वरूपपरित्यागे सति नानाकारप्रतिभासः परिणाम इत्यपरे । वेदान्तिनस्तु –> उपादानसमसत्ताकत्वे सति अन्यथाभाव. परिणामः, विवर्तवारणाय सत्यन्तम्, घटस्य तन्तुपरिणामत्ववारणाय विशेष्यमित्याहुः । **तस्मिन्** = परिणामिनि **आत्मनि एतत् अखिल सम्भवेदिति** सम्बन्ध. । तदुक्त **योगबिन्दौ** –> परिणामिन्यतो नीत्या चित्रभावे तथाऽऽत्मनि । अवस्थाभेदसङ्गत्या योगमार्गस्य सम्भव' ॥४९०॥ <– इति ।

**मुक्तिवादिना** नैयायिक-वैशेषिक-साङ्ख्य-बौद्धादीना नास्तिकव्यतिरिक्ताना **आत्मसत्ताया अविप्रतिपत्तेः** नात्रात्मसिद्धि-प्रयासः, नैयायिक-बौद्धादीना **तन्नित्यत्वक्षणिकत्वादावेव विप्रतिप्रत्तेः तन्निरासाय** = आत्मन एकान्तनित्यत्वैकान्तानित्यत्व प्रतिक्षेपाय इद = 'परिणामिनि' इति **विशेषण** गृहीतम् । **अध्यात्मकमलमार्तण्डेऽपि** –> नित्य त्रिकालगोचरधर्मत्वात् प्रत्यभिज्ञतस्तदपि । क्षणिक कालविभेदात् पर्यायनयादभाणि सर्वज्ञै. ॥ <– [३/२५] इत्येव नित्यत्वानुविद्धानित्यत्वमुपदर्शितम् । एकान्तनित्यत्वे कर्तृत्व-भोक्तृत्वानुपपत्तिः, तदुक्त **योगबिन्दौ** –> एवमेकान्तनित्योऽपि हन्तात्मा नोपपद्यते । स्थिरस्वभाव एकान्ताद् यतो नित्योऽभिधीयते ॥४७८॥ तदय कर्तृभाव' स्यात् भोक्तृभावोऽथवा भवेत् । उभयानुभयभावो वा सर्वथाऽपि न युज्यते ॥४७९॥ एकान्तकर्तृभावत्वे कथ भोक्तृत्वसम्भवः । भोक्तृभावनियोगेऽपि कर्तृत्व ननु दु'स्थितम् ॥४८०॥ न चाकृतस्य भोगोऽस्ति कृतश्चाभोगमित्यपि । उभयानुभयभावत्वे विरोधासम्भवौ ध्रुवौ ॥४८१॥ यत्तथोभयभावत्वेऽप्यभ्युपेत विरुध्यते । परिणामित्वसङ्गत्या न त्वागोऽत्रापरोऽपि वः ॥४८२॥ <– इत्यादि । एवमेकान्तक्षणिकत्वेऽपि तस्य द्वितीयक्षणे सर्वथोच्छेदेन हेतोरभावान्नोत्तरक्षण-प्रसूतिः सम्भवति, अन्यथा पूर्वक्षणस्यैव कथञ्चिदभावीभूतस्योत्तरकार्यतया भवनेनान्वयः समाढौकते । तदुक्त **योगबिन्दौ** –> क्षणिकत्व तु नैवास्य क्षणादूर्ध्व विनाशत. । अन्यस्याभावतोऽसिद्धेरन्यथाऽन्वयभावत. ॥४६८॥ एव कृतनाशाऽकृताभ्यागमादि-दोषजालमप्येकान्तक्षणिकत्वे दुर्वारमित्यवोचाम **जयलतायाम्** [स्याद्वादरहस्यटीका प्र ख पृ १४५] ।

**आत्मभिन्ने अविद्याऽदृष्ट-सस्कारादिपदवाच्ये** । वेदान्तिभि अविद्यापदेन, वैशेषिकादिभि. अदृष्टशब्देन, सौगतै सस्कारा-भिधानेन, वेदवादिभि. पुण्याद्याख्यया, मीमासकैरपूर्ववाचकेन, गणकै शुभादिपर्यायेण, साङ्ख्यै. धर्मादिनाम्ना, शैवै. पाशा-ख्यानेन; स्याद्वादिभिरस्माभिः कर्मसञ्ज्ञया, लोकै' दैव-विध्यादिध्वनिना, कैश्चित् अतिशयवचनेन, अन्यै. शक्तिव्यपदेशेन, परै बीजापदेशेन, अपरै. क्लेशसङ्केतेन, इतरैः मायाप्रातिपदिकेन यत् प्रतिपाद्यते तस्मिन् **परमार्थतो विद्यमाने एव** प्रागुक्त **अखिल सम्भवेत्** । तच्च कालान्तरभाविफलानुकूलविहितनिषिद्धक्रियाजन्यभावव्यापाररूपमिति **अदृष्टसिद्धिवादे** [१] **प्रोक्तम्** । कर्म च कर्तारमनुगच्छति । तदुक्त **श्रीसिद्धसेनदिवाकरैः द्वात्रिंशिकाप्रकरणे** –> न कर्म कर्तारमतीत्य वर्तते य एव कर्ता स फलान्य-श्नुते । तदष्टधा पुद्गलमूर्त्ति कर्मज यथाऽऽत्थ नैव भुवि कश्चनाऽपर. ॥ <– [१/२६] इति । व्यवच्छेद्यमाह- **न तु सावृतसत्त्वेन**

કહેવાય જીવ આવો પરિણામી સ્વીકારવામા આવે તો જ પૂર્વોક્ત અવિદ્યારહિત અવસ્થા, વૈશેષિકગુણરહિત પુરુષ, પશુત્વવિગમ વગેરે બધુ ઘટી શકે અથવા સમ્યગ્દર્શન, સમ્યગ્જ્ઞાન, સદનુષ્ઠાન વગેરે પ્રકરણોમા જણાવેલ તે તે શબ્દોથી વાચ્ય બધુ સભવી શકે આત્માનુ 'પરિણામી' આવુ વિશેષણ લગાડવાનો મતલબ એ છે કે તે લોકો મોક્ષને સ્વીકારે જ છે પરતુ 'આત્મા છે કે નહિ ?' આવો કોઈ વિવાદ છે જ નહિ સર્વમુક્તિવાદીઓ આત્મસત્તાને સ્વીકારે જ છે પરતુ 'આત્મા નિત્ય છે કે ક્ષણિક ?' આ બાબતમા જ વિવાદ છે એકાત નિત્યતા અને સર્વથા ક્ષણિકતાનુ નિરાકરણ કરવા માટે 'પરિણામી' એવુ આત્માનુ વિશેષણ જણાવેલ છે તેમ જ અવિદ્યા, અદષ્ટ, સસ્કાર વગેરે શબ્દથી વાચ્ય કર્મ જે આત્માથી ભિન્ન હોય અને વાસ્તવિક = પરમાર્થથી વિદ્યમાન હોય તો જ ઉપરોક્ત બધુ ઘટી શકે સાવૃતસત્યરૂપે [કે જે બૌદ્ધસમત છે] અવિદ્યા વગેરેનો સ્વીકાર કરવામા આવે

१ मुद्रितप्रतौ 'तस्मिन्नित्य ' इति पाठ ।

दृष्ट-सस्कारादिपदवाच्ये **वस्तुसति एव** = परमार्थतो विद्यमाने एव, न तु सावृतसत्त्वेनाऽभ्युपगम्यमाने, तस्य कल्पितरूपत्वेन तत्त्वतोऽसत्त्वात् ॥१६/५॥ तथा **'तद्योगे'**त्यादि ।

**तद्योगयोग्यताया चित्राया चैव नान्यथा नियमात् । परिभावनीयमेतद्विद्भिस्तत्त्वदृष्ट्योच्चैः ॥१६/६॥**

तेन = अर्थान्तरभूतेन तत्त्वेन अविद्यादिना योग = सम्बन्ध = आत्मन कर्मबन्ध इत्यर्थ, तस्मिन् योग्यता = जीवस्य कर्मपुद्गलग्राहकस्वभावत्व अनादिपारिणामिकभव्यभावलक्षण सहजमलरूप मुक्तिसमये विनिवृत्तिमत्,

कल्याणकन्दली

= मिथ्यात्वसवलितत्वे सति व्यवहारौपयिकसत्यत्वेन वेदान्तिभि, अपारमार्थिकत्वे सति अविसवादिव्यवहारसाधकत्वेन च बौद्धै अभ्युपगम्यमाने, तस्य सावृतसत्यस्य मिथ्यात्वानुविद्धतया **कल्पितरूपत्वेन** = काल्पनिकत्वेन **तत्त्वत** = परमार्थत असत्त्वात् । असतश्च वन्ध्यापुत्रवन्नार्थक्रियाकारित्व सम्भवति । यथोक्त **साङ्ख्यसूत्रे** –> नावस्तुनो वस्तुसिद्धि <– [१/७८] । ततश्चोपाधिजनितत्वे सति उपाधिजनक अविद्यादि पारमार्थिकमेवाभ्युपेयम् । यदपि **सौरपुराणे** –> नाऽसद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥ <– [११/२८] इत्युक्तम्, तदपि तस्या पारमार्थिकत्वे एव घटते, अन्यथा सनातनत्वानुपपत्ते । सर्वदा मिथ्यारूपत्वे खपुष्पादिवदर्थक्रियाकारित्वानुपपत्ति । तथा च –> प्रकृत्या सर्वमेवेद जगदन्धीकृत <– [३०३/३५] इति **मोक्षधर्मवचनमसङ्गत** स्यात् । तदुक्त **आचाराङ्गे**ऽपि –> कम्मुणा उवाही जायइ <– [१/३/१] । –> माया तु प्रकृति विद्यात् <– [४/१०] इति **श्वेताश्वतरोपनिषद्वचनमपि** तत्त्वतो मायाया कर्मप्रकृतिरूपतामाह । यदपि **गरुडपुराणे** –> अनात्मन्यात्मविज्ञानमसत सत्स्वरूपता । सुखाभावे तथा सौख्य माया विद्याविनाशिनी ॥ <– [ ] इत्युक्त तदपि मायाया पारमार्थिकत्वे एव घटते । एतेन –> वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् <– [४/४०/३०] इति **योगवाशिष्ठोक्तिरपि** निरस्ता, 'नाभाव, उपलब्धे' [२/२/२८] भाव. चोपलब्धे' <– [१२/१/१५] इति **ब्रह्मसूत्राभ्यामेवात्यन्ततुच्छताया** निराकरणात् । यथोक्त **साङ्ख्यसूत्रे**ऽपि –> उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् <– [६/४६] इत्यादिकम् ॥१६/५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> तद्योगयोग्यताया चित्राया चैव, नान्यथा, विद्वद्भि एतत् नियमात् उच्चै तत्त्वदृष्ट्या परिभावनीयम् ॥१६/६॥ योग्यता = जीवस्य कर्मपुद्गलग्राहकस्वभावत्व, तद्विरहे कर्मबन्धासम्भवात् अन्यथाऽऽकाशेऽपि तदापत्ते । तदुक्त **योगबिन्दौ** –> योग्यतामन्तरेणास्य सयोगोऽपि न युज्यते । सा च तत्तत्त्वमित्येव तत्सयोगोऽप्यनादिमान् ॥१०॥ <– इति । सहजमलरूप, तदुक्त **योगबिन्दौ** –> सहज तु मल विद्यात् कर्मसम्बन्धयोग्यताम् । आत्मनोऽनादिमत्त्वेऽपि

તો ઉપરોક્ત વસ્તુ ઘટી ન શકે, કારણ કે સાવૃતિક સત્ય તો કાલ્પનિક હોવાથી વાસ્તવમા છે જ નહિ [૧૬/૫]

## ◙ એકાતપક્ષમાં અસંગતિ ◙

**વિશેષાર્થ** :- આત્મા એકાત નિત્ય હોય, તેના સ્વરૂપમા કોઈ પણ જાતનો ફેરફાર ક્યારેય પણ ન જ થાય તો સસાર અવસ્થામા આત્મા અવિદ્યાસયુક્ત, વૈશેષિકગુણસહિત, પશુત્વ-અજ્ઞત્વયુક્ત, દુ ખી હોવાથી તે કાયમ માટે મોક્ષમા પણ તેવો જ રહેશે, કારણ કે તે જો મોક્ષમા અવિદ્યારહિત, વૈશેષિકગુણશૂન્ય બને તો અવિદ્યાસયુક્તત્વ, વૈશેષિકગુણસહિતત્વ રૂપે આત્માનો નાશ થઈ જવાથી 'આત્મા એકાત નિત્ય છે' આ સિદ્ધાત ભાગી પડે તથા આત્માને ક્ષણિક માનવામા આવે તો બીજી ક્ષણે આત્મા જ ન રહેવાથી મોક્ષ કોનો થાય ? માટે આત્માને નિત્યાનિત્ય = કથચિત્ અવિનાશી અને કથચિત્ વિનાશી = પરિણામી માનવો જ પડશે અર્થાત્ અવિદ્યાસયુક્તત્વ વૈશેષિકગુણસહિતત્વ વગેરે સ્વરૂપે નષ્ટ થયેલ આત્મા મોક્ષમા અવિદ્યારહિતત્વ, વૈશેષિકગુણશૂન્યત્વ વગેરે સ્વરૂપે વિદ્યમાન છે - આવુ માનવામા કોઈ દોષ નથી

## ⁂ કર્મ આત્મભિન્ન અને વાસ્તવિક છે ⁂

વળી, જો કર્મ નામની ચીજ જ ન હોય તો જીવનો સસાર જ ઘટી ન શકે, કારણ કે સસાર કર્મનિર્મિત છે જો કર્મ આત્માથી અભિન્ન હોય તો મોક્ષમા આત્મા વિદ્યમાન હોવાથી કર્મ પણ વિદ્યમાન જ રહેશે અથવા કર્મનો નાશ થવાથી એનાથી અભિન્ન આત્માનો પણ નાશ થશે માટે કર્મ = અવિદ્યા વાસ્તવિક છે અને આત્માથી ભિન્ન છે. અવિદ્યાનો સપૂર્ણ-સદા માટે વિયોગ થાય એ જ મોક્ષ અવિદ્યારહિત શુદ્ધગુણસપન્ન આત્મા મોક્ષમા છે - એવુ માનવુ જ પડશે [૧૬/૫]

**ગાથાર્થ** - અવિદ્યાનો યોગ થવાથી અનેકવિધ યોગ્યતા આત્મામા હોય તો જ ઉપરોક્ત વસ્તુ ઘટી શકે, બાકી ન જ ઘટી શકે - વિદ્વાનોએ આ તત્ત્વ નિયમા અત્યત તત્ત્વદષ્ટિથી વિભાવન કરવુ [૧૬/૬]

## ◙ કર્મબંધની વિવિધ યોગ્યતા આત્મામાં છે ◙

तस्या **चित्राया** चैव = नानाप्रकारायामेव सत्या **नान्यथा**, एकस्वभावाया योग्यताया फलभेदाऽसिद्धे । दृश्यते च द्रव्य-क्षेत्र-काल-भावप्रक्रमेण तीर्थकराऽतीर्थकर-प्रत्येकबुद्ध-स्वयबुद्धादिरूप फलभेद । तस्मात् तन्नियामक योग्यतावैचित्र्यमवश्यमाश्रयणीयमिति **नियमात्** = नियमेन **परिभावनीय** = सर्वै प्रकारै चिन्तनीय **एतत्** = त्रय जीव-कर्म-भव्यत्वरूप **विद्वद्भि** = सूरिभि **तत्त्वदृष्ट्या** = आगमापनीतविपर्ययमलया प्रज्ञया **उच्चै** = अत्यर्थम् ।

**कल्याणकन्दली**

नायमेना विना यत. ॥१६४॥ <— इति । अय = कर्मबन्ध. । योग्यतामन्तरेणाऽपि कर्मबन्धाङ्गीकारे मुक्तस्यापि कर्मसयोगापत्ति. । —> तस्मादवश्यमेष्टव्या स्वाभाविक्येव योग्यता । तस्यानादिमती सा च मलनात् मल उच्यते ॥१६८॥ <— इति **योगविन्दौ** व्यक्तम् । योग्यतैव परै.दिदृक्षादिपदेनोच्यते, यथोक्त **योगविन्दौ** —> दिदृक्षा-भवबीजादिशब्दवाच्या तथा तथा । इष्टा चान्यैरप्येषा मुक्तिमार्गावलम्बिभि. ।२६९॥ <— इति । **मुक्तिसमये विनिवृत्तिमत्**, अन्यथा मुक्तस्यापि कर्मबन्धापत्तेः । तदुक्त **योगदृष्टिसमुच्चये** —> दिदृक्षाद्यात्मभूत तन्मुख्यमस्य निवर्तते । प्रधानादिनतेर्हेतुस्तदभावान्न तन्नति· ॥२००॥ <— इति । तन्नति = कर्माऽदृष्टाऽपूर्वाद्यपराभिधानप्रधानपरिणति. कर्मबन्धरूपा ।

**तन्नियामक** = तीर्थकरातीर्थकर-प्रत्येकबुद्धादिरूपफलभेदनियामक **योग्यतावैचित्र्य अवश्यमाश्रयणीयम्** । यदि च योग्यत्वमेकस्वभाव स्यात् तदा तीर्थकराऽतीर्थकरादिभेद. सिद्धान्तोक्तो विघटेत । न हि ऋजुसूत्रादय पर्यायनया· कारणभेद विना कार्यभेद मन्यन्ते, अन्यथा एकस्मादेव कारणात् सकलत्रैलोक्यकार्योत्पत्तिप्रसङ्गेन कारणान्तरकल्पनावैयर्थ्यप्रसङ्गात् । **परिभावनीय जीव-कर्म-भव्यत्वरूप** = नानाजीव-विचित्रवस्तुसत्कर्म-तथाभव्यत्वस्वरूपम् । इदमेवाभिसन्धाय **पञ्चसूत्रे** —> तहाभव्वत्ताइभावओ, विचित्तमेअ तहाफलभेएण, नाविचित्ते सहकारिभेओ, तदविक्खो तओत्ति । अणेगतवाओ तत्तवाओ । स खलु एव, इहरहेगतो, मिच्छत्तमेसो, न इत्तो ववत्था, अणारिहमेअ, ससारिणो उ सिद्धत्त, नाऽबद्धस्य मुत्ती सद्दत्थरहिआ <— [५/३] इत्यादि । अत्र च **श्रीहरिभद्रसूरि**भिरेव —> 'समाने भव्यत्वादौ कथमेतदेवम् ? इत्याह- तथाभव्यत्वादिभावात्, तथाफलपरिपाकीह तथाभव्यत्वम् । अत एवाह- विचित्र एतत् = तथाभव्यत्वादि । कुत ? इत्याह तथा फलभेदेन = कालादिभेदभाविफलभेदेनेत्यर्थ । समाने भव्यत्वे सहकारिभेदात् फलभेद इत्याशङ्कापोहायाह-नाविचित्रे तथाभव्यत्वादौ सहकारिभेद. । किमिति ? इत्याह - तदपेक्षः तक इति तदतत्स्वभावे तदुपनिपाताभावादिति । अनेकान्तवादस्तत्त्ववाद., सर्वकारणसामर्थ्याऽऽपादनात् । स खलु अनेकान्तवाद एव = तथाभव्यत्वादिभावे । इतरथैकान्त सर्वथा भव्यत्वादे. तुल्यतायाम् । तत किमित्याह - मिथ्यात्वमेव एकान्त । कुत ? इत्याह- नातो व्यवस्था, एकान्तात् भव्यत्वाऽभेदे सहकारिभेदस्याऽयोगात्, तत्कर्मताभावात् कर्मणोऽपि कारकत्वात्, अतत्स्वभावस्य च कारकत्वाऽसम्भवादिति भावनीयम् । अत एवाह-अनार्हत एतत् = एकान्ताश्रयणम् । प्रस्तुतप्रसाधकमेव-न्यायान्तरमाह - ससारिण एव सिद्धत्व, नान्यस्य-कोऽय नियमः ? इत्याह-नाबद्धस्य मुक्ति. तात्त्विकी, इत्याह-शब्दार्थरहिता बन्धाभावेन <— [पृ १७/१८] इत्यादि व्याख्यातम् । **योगविन्दौ** अपि —> सासिद्धिकमिद ज्ञेय सम्यक् चित्र च देहिनाम् । तथाकालादिभेदेन बीजसिद्ध्यादिभावत. ॥२७५॥ सर्वथा योग्यताऽभेदे तदभावोऽन्यथा भवेत् । निमित्तानामपि प्राप्तिस्तुल्या यत्तन्नियोगत ॥२७६॥ अन्यथा योग्यताऽभेद· सर्वथा नोपपद्यते । निमित्तोपनिपातोऽपि यत्तदाक्षेपतो ध्रुवम् ॥२७७॥ योग्यता चेह विज्ञेया बीजसिद्ध्याद्यपेक्षया । आत्मन सहजा चित्रा तथाभव्यत्वमित्यत ॥२७८॥ <— इत्यादिकम् । यथोक्त **उपदेशपदेऽपि** —> तहभव्वत्त चित्त अकम्मज आयतत्तमिह णेय । फलभेया तह कालाइयाणमक्खेवगसहाव ॥९९९॥ <— इति । **ललितविस्तरायामपि** —> भव्यत्व नाम सिद्धिगमनयोग्यत्वम्, अनादिपारिणामिको भाव. । तथाभव्यत्वमिति च विचित्रमेतत्, कालादिभेदेनाऽऽत्मना बीजादिसिद्धिभावात्, सर्वथा योग्यताऽभेदे

**<u>टीकार्थ</u>** - આત્માથી ભિન્ન અવિદ્યા વગેરે સાથે સબધ = કર્મબધ થવાની જીવની યોગ્યતા છે કર્મના પુદ્ગલોને ગ્રહણ કરવાનો જીવસ્વભાવ છે કે જે અનાદિપારિણામિકભવ્યત્વસ્વરૂપ છે તે સહજમલસ્વરૂપ છે અને મોક્ષસમયે સર્વથા નિવૃત્તિ પામે છે આવી કર્મબધયોગ્યતા પણ અનેક પ્રકારની હોય તો જ ઉપરોક્ત બધુ ઘટી શકે બાકી નહિ, કારણ કે જીવોની એકસ્વરૂપે કર્મબધયોગ્યતા હોય તો ફલભેદ ઘટી ન શકે પરતુ દ્રવ્ય, ક્ષેત્ર, કાલ અને ભાવને આશ્રયીને તીર્થકરસિદ્ધ, અતીર્થકરસિદ્ધ, પ્રત્યેકબુદ્ધસિદ્ધ, સ્વયસબુદ્ધસિદ્ધ વગેરે સ્વરૂપ ફલભેદ મોક્ષમા દેખાય તો છે જ માટે તેની નિયામક કર્મબધયોગ્યતાગત વિચિત્રતા-વિવિધતા અવશ્ય સ્વીકારવી પડે આગમથી જેનો મલ-દોષ દૂર થયેલ છે તેવી પ્રજ્ઞાસ્વરૂપ તત્ત્વદષ્ટિથી વિદ્વાન આચાર્ય ભગવતોએ નિયમા સર્વ પ્રકારે જીવ, કર્મ અને તથાભવ્યત્વ- આ ત્રણ તત્ત્વનુ અત્યત ચિતન કરવુ જોઈએ

ननु तीर्थकरसिद्धत्वादिकं नीलघटत्वादिवदर्थसमाजसिद्धमिति तत्प्रयोजकतया योग्यताभेदो न सिध्येदिति चेत् ? न, कार्ये तावद्धर्मकत्वस्य योग्यताविशेषप्रयोज्यत्वात्, तत्र तथाविधसामग्रीसमाजस्य प्रयोजकत्वे तत्रापि तथाविधप्रयोजकान्तराऽऽश्रयणेऽनवस्थानात् । यदि चेयमनवस्था 'प्रामाणिकी न दोषाय तदाऽयं नियतधर्मककार्यनियामक-

कल्याणकन्दली

तदभावात् । तत्सहकारिणामपि तुल्यत्वप्राप्ते, अन्यथा योग्यताऽभेदाऽयोगात्, तदुपनिपाताक्षेपस्यापि तन्निबन्धनत्वात् <— [पृ ३२] इत्युक्तम् । एतदनुसारेण श्रीमुनिचन्द्रसूरिभिः धर्मबिन्दुवृत्तौ —> भव्यत्वं नाम सिद्धिगमनयोग्यत्वं अनादिपारिणामिको भाव आत्मगततत्त्वमेव । तथाभव्यत्वं तु भव्यत्वमेव कालादिभेदेनाऽऽत्मना बीजसिद्धिभावात् नानारूपतापन्नमि [२/६८] त्युक्तम् । तैरेव उपदेशपदवृत्तौ —> भव्यत्वं नाम सिद्धिगमनयोग्यत्वं अनादिपारिणामिको भावः । तथाभव्यत्वं त्वेतदेव विचित्रं द्रव्य-क्षेत्रादिभेदेन जीवानां बीजाधानादिहेतुः <— [गा १६३ पृ १३०] इत्युक्तम् । स्याद्वादकल्पलतायां टीकाकृता तु —> मुक्तत्व-प्रयोजिका सामान्यतोऽभव्यव्यावृत्ता जातिर्भव्यत्वमिति गीयते प्रत्यात्मं तथातथापरिणामितया समुपात्तविशेषा च तथाभव्यत्वमिति <— [९/६-पृ ६७] व्याख्यातम् । तथाभव्यत्वमेव कालनियतिपूर्वकृतकर्मणामाक्षेपकस्वभावम् ।

ननु सामग्र्या कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यत्वात् तीर्थकरसिद्धत्वाद्यवच्छिन्नस्याऽनापत्तिरेव । न हि तीर्थकरसिद्ध-त्वादिकं कार्यतावच्छेदकं किन्तु नीलघटत्वादिवत् अर्थसमाजसिद्धं = नानासामग्रीसम्पादितम् । इति हेतोः तत्प्रयोजकतया = तीर्थकरसिद्धत्वादिप्रयोजकतया योग्यताभेदः = नानाविध-तथाभव्यत्वं न सिध्येत् । तीर्थकराऽतीर्थकरसिद्धादिभेदाभिधा च वैधर्म्यमात्राभिप्रायेणैवेति भव्यत्वभेदे मानाभाव इति चेत् ? न, कार्ये तावद्धर्मकत्वस्य योग्यताविशेषप्रयोज्यत्वात् तीर्थकर-सिद्धत्वाद्यवच्छिन्ने नियामकस्याऽवश्यं वाच्यत्वात् । न च तत्र तीर्थकरसामग्र्या तत्र तीर्थकरत्वं सिद्धसामग्र्या च सिद्धत्वमुपस्थापित-मिति सामग्रीद्वितयमेव तीर्थकरसिद्धत्वप्रयोजकमिति वक्तव्यम्, दर्शितरीत्या तत्र = तीर्थकरसिद्धत्वादौ तथाविधसामग्री-समाजस्य तीर्थकरत्वावच्छिन्नसामग्री-सिद्धत्वावच्छिन्नसामग्र्यादिसमूहस्य प्रयोजकत्वे = नियामकत्वे तु 'तस्मिन्नेवात्मनि कुतः तथाविधसामग्रीकूटः न त्वन्यस्मिन्नात्मनि ?' इति पर्यनुयोगापातात् । तदपाकरणाय तत्राऽपि = तथाविधसामग्रीसमाजेऽपि तथाविधप्रयोजकान्तराश्रयणे अनवस्थानात् = प्रयोजककल्पनापरम्परानुपरमात् । यदि च इयं अनवस्था प्रामाणिकी = प्रमाणसिद्धकार्यकारणभावाधीना इति न दोषाय इत्युच्यते तदा अयं नियतधर्मककार्यनियामकः = कार्यगतप्रतिनियतधर्मविशेष-

**શંકા** - તીર્થંકરસિદ્ધત્વ વગેરે તો નીલઘટત્વ વગેરેની જેમ અર્થસમાજસિદ્ધ છે. માટે તેના પ્રયોજક તરીકે યોગ્યતાભેદ સિદ્ધ થઈ નહિ શકે. [મતલબ એ છે કે ઘટની સામગ્રી દ્વારા ઘટ ઉત્પન્ન થાય છે. નીલ રૂપની સામગ્રી દ્વારા ઘટમાં નીલ રૂપ ઉત્પન્ન થાય છે. ઘટસામગ્રીપ્રયોજ્ય ઘટત્વ છે અને નીલસામગ્રીપ્રયોજ્ય નીલરૂપત્વ છે. માટે નીલત્વવિશિષ્ટઘટત્વ = નીલઘટત્વ એ અર્થસમાજસિદ્ધ = સામગ્રીદ્વયપ્રયુક્ત છે. માટે તે ગુણધર્મ કાર્યતાનો અવચ્છેદક ન બની શકે. તે જ રીતે તીર્થંકર બનવાની સામગ્રીથી જીવ તીર્થંકર બને છે. સિદ્ધ થવાની સામગ્રીથી જીવ સિદ્ધ બને છે. માટે તીર્થંકરસામગ્રીથી તીર્થંકરત્વ પ્રયોજ્ય છે અને સિદ્ધસામગ્રીથી સિદ્ધત્વ પ્રયોજ્ય છે. તીર્થંકરત્વવિશિષ્ટ સિદ્ધત્વ = તીર્થંકરસિદ્ધત્વ તો અર્થસમાજસિદ્ધ = બે સામગ્રીથી પ્રયુક્ત છે. તીર્થંકરસિદ્ધત્વ વગેરે ધર્મ કોઈના કાર્યતાઅવચ્છેદક ન બનવાથી તેના પ્રયોજક તરીકે જીવમાં યોગ્યતાવિશેષ સિદ્ધ નહિ થઈ શકે. માટે યોગ્યતાવિશેષનો સ્વીકાર ન કરવામાં આવે તો પણ કોઈકમાં તીર્થંકરસિદ્ધત્વ, અન્યમાં અતીર્થંકરસિદ્ધત્વ... વગેરે ધર્મભેદ મોક્ષમાં સંભવી શકવામાં કોઈ દોષ નથી. માટે જીવમાં કર્મબંધની વિભિન્ન પ્રકારની યોગ્યતાનો સ્વીકાર કરવામાં ન આવે તો પણ મોક્ષમાં ફલભેદ ઘટી શકે છે.]

## ✧ તીર્થંકરસિદ્ધત્વ વગેરે યોગ્યતાવિશેષપ્રયુક્ત છે ✧

**સમાધાન** - કાર્યમાં જેટલા ધર્મો આવે તે બધા ધર્મોનો સમૂહ યોગ્યતાવિશેષથી પ્રયોજ્ય છે. [—> કોઈ જીવ તીર્થંકરસિદ્ધ થાય તો તેમાં રહેલ તીર્થંકરત્વવિશિષ્ટસિદ્ધત્વ ધર્મ પ્રત્યે તીર્થંકર થવાની સામગ્રી અને સિદ્ધ થવાની સામગ્રી બન્ને પ્રયોજક બની શકે છે. કોઈ જીવ અતીર્થંકરસિદ્ધ થાય તેમાં રહેલ અતીર્થંકરત્વવિશિષ્ટસિદ્ધત્વ ધર્મ પ્રત્યે અતીર્થંકર બનવાની સામગ્રી અને સિદ્ધ થવાની સામગ્રી-બન્ને પ્રયોજક બની શકે છે. માટે યોગ્યતા વિશેષનો સ્વીકાર ન કરવામાં તો પણ તીર્થંકરસિદ્ધ - અતીર્થંકરસિદ્ધ વગેરે ફલભેદ સંગત થઈ શકે છે <— આ શંકા નિરાધાર હોવાનું કારણ એ છે કે] તીર્થંકરસિદ્ધત્વ વગેરે પ્રત્યે તથાવિધ સામગ્રીના સમૂહને પ્રયોજક માનવામાં આવે તો પણ એક જીવ પાસે તીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમૂહ અને અન્ય જીવ પાસે અતીર્થંકર-સિદ્ધત્વપ્રયોજક સામગ્રી સમૂહ મળે એમાં કોણ નિયામક = પ્રયોજક બનશે ? આ સમસ્યાનું સમાધાન કરવા માટે તેવા પ્રકારના

' मुद्रितप्रतौ —> प्रामाणिकाना <— इत्यशुद्धः पाठः ।

स्तथाविधसामग्रीसमाज एव कथञ्चिदेकत्वेन भासमान परिणामिभव्यत्वरूप स्वीक्रियताम् । इत्थमपि स्याद्वाद-प्रक्रियया दोषाभावादित्यधिकमस्मत्कृत-**स्याद्वादकल्पलतायाम्** ॥१६/६॥

एतत्त्रयानाश्रयणे ससार-मोक्षयोरनुपचरितयोरभावमापादयन्नाह –> '**पुरुषे**'त्यादि ।

**पुरुषाद्वैत तु यदा भवति विशिष्टमथ च बोधमात्र वा । भव-भवविगमविभेदस्तदा कथ युज्यते मुख्यः ॥१६/७॥**

द्वयोर्भाव द्विता, तस्या भव सैव वा द्वैतम् । न द्वैत = अद्वैत, पुरुषस्याऽद्वैत = **पुरुषाद्वैतम्** । तत् **तु यदा भवति** परतत्त्वमभ्युपगत वेदान्तवादिभि, अथवा **विशिष्ट** = रागादिवासनारहित **बोधमात्र** = बोधस्वलक्षण

कल्याणकन्दली

प्रयोजकः **तथाविधसामग्रीसमाज.** = तीर्थकरत्वावच्छिन्न-सिद्धत्वावच्छिन्नप्रभृतिसामग्रीकलाप **एव कथञ्चित्** = सङ्ग्रहनयार्पणया **एकत्वेन भासमानः परिणामिभव्यत्वरूपः स्वीक्रियताम्** । **इत्थमपि स्याद्वादप्रक्रियया** = एकानेकत्व-भिन्नाभिन्नत्व-नित्यानित्यत्वादिधर्मयुगलसमावेशरीत्या **दोषाभावात्** = अपेक्षाभेदाद्यवलम्बनेन विरोधादिदोषपरिहारात् । **न च** सामान्यतः क्लृप्त-कारणताकतत्तद्व्यक्तीनामेव तन्नियामकत्वमिति **वाच्यम्**, तादृशनियामकत्वमेव हेतुत्वमिति तावद्व्यक्तिविशेषकल्पनापेक्षया भव्यत्वविशेष एवान्तरङ्गत्वात् कल्पयितु युक्त इति कि न विभाव्यते ? **न च** विशेषरूपेण तत्तद्व्यक्तीनामन्यथासिद्धत्वान्न हेतुत्वमिति **वाच्यम्**, एव सति द्रव्यत्वेन जन्यभावत्वेनैक एव कार्यकारणभाव. स्यादिति तन्तुत्वादिना कारणत्वबुद्धि-व्यपदेश-योरप्रामाण्यापत्तिरित्यधिक **उपदेशरहस्यवृत्तौ** [पृ ३०५ गा १८८] ॥१६/६॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> यदा तु पुरुषाद्वैत अथ च विशिष्ट बोधमात्र वा तदा मुख्यः भव-भवविगमविभेद' कथ युज्यते ? ॥१६/७॥

पुरुषाद्वैतमतनिराकरणन्तु **योगविन्दौ** –> यदा नार्थान्तर तत्त्व विद्यते किञ्चिदात्मनाम् । मालिन्यकारि तत्त्वेन, न तदा बन्धसम्भव ॥५१९॥ असत्यस्मिन् कुतो मुक्तिर्बन्धाभावनिबन्धना । मुक्तमुक्तिर्न यन्न्याय्या भावेऽस्याऽतिप्रसङ्गिता ॥५२०॥ कल्पितादन्यतो बन्धो न जातु स्यादकल्पित. । कल्पितश्चेत्ततश्चिन्त्यो ननु मुक्तिरकल्पिता ॥५२१॥ नाऽन्यतोऽपि तथाभावादृते तेषा भवादिकम् । तत. कि केवलाना तु ननु हेतुसमत्वत. ॥५२२॥ मुक्तस्येव तथाभावकल्पता यन्निरर्थका । स्यादस्या प्रभवन्त्या तु बीजादेवाऽङ्कुरोदय ॥५२३॥ <– इत्येव मूलकारैरेव कृतम् ।

અન્ય પ્રયોજકનો આશ્રય લેવો પડશે (કે જેનો સ્વીકાર કરવાથી 'તીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમૂહનો પ્રયોજક જેની પાસે હશે તે જીવ તીર્થંકરસિદ્ધ થાય અને જેની પાસે અતીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમુદાય હશે તે જીવ અતીર્થંકરસિદ્ધ થાય' - આવી વ્યવસ્થા કરી શકાય પરતુ આટલુ માનવાથી જ નિસ્તાર નહિ થાય હવે આગળ એક પ્રશ્ન થશે કે –> એક જીવ પાસે તીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમૂહનો પ્રયોજક છે અને બીજા જીવ પાસે અતીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમુદાયનો પ્રયોજક છે આનુ વ્યવસ્થાપક કોણ બનશે ? બધા જ જીવ પાસે તીર્થંકરસિદ્ધત્વપ્રયોજક સામગ્રીસમૂહનો પ્રયોજક કેમ નથી ? આ સમસ્યાના સમાધાન માટે અન્યવિધ પ્રયોજકની કલ્પના કરવી પડશે આવુ કરવામા તો તેવા અનેક પ્રયોજકોની કલ્પના કરવાની પરપરાનો અત જ નહિ આવે દાર્શનિક પરિભાષા મુજબ આ અનવસ્થાદોષ કહેવાય મતલબ કે) આવી કલ્પના કરવાથી અનવસ્થાદોષ આવશે જો આ અનવસ્થા પ્રમાણથી પ્રવૃત્તિ કરનારા વિદ્વાનોને માટે દોષ સ્વરૂપ ન બનતી હોય [અર્થાત્ તે અનવસ્થાને પ્રમાણમૂલક કહીને નિર્દોષ કહેવી હોય] તો નિયતધર્મવિશિષ્ટ કાર્યનો [= કાર્યગત પ્રતિનિયતધર્મકત્વનો] નિયામક તથાવિધ સામગ્રીનો સમુદાય જ કથચિત્ એકત્વરૂપે જણાતો પરિણામિભવ્યત્વસ્વરૂપ સ્વીકારો આ રીતે સગ્રહ નયની અપેક્ષાએ એકસ્વરૂપે જણાતો પરિણામિભવ્યત્વ-સ્વરૂપ તથાવિધ સામગ્રીસમૂહ સ્વીકારવામા પણ સ્યાદ્વાદપદ્ધતિથી કોઈ દોષ આવતો નથી આ વિષયનો અધિક વિસ્તાર અમે [મહોપાધ્યાય યશોવિજયજી ગણિવર્યશ્રીએ] રચેલ સ્યાદ્વાદકલ્પલતા (= શાસ્ત્રવાર્તાસમુચ્ચયટીકા) ગ્રથમા જોઈ લેવો [૧૬/૬]

પુરુષ, કર્મ અને તથાભવ્યત્વ - આ ત્રણને સ્વીકારવામા ન આવે તો તાત્ત્વિક = વાસ્તવિક સસાર અને મોક્ષનો અભાવ થવાની આપત્તિ આવે - એવુ જણાવતા ગ્રથકારશ્રી કહે છે કે —

__ગાથાર્થ__ :- જ્યારે પુરુષાદ્વૈત હોય અથવા વિશિષ્ટ જ્ઞાનમાત્ર જ હોય તો સસાર અને મોક્ષનો મુખ્ય ભેદ કેવી રીતે ઘટી શકે ? [૧૬/૭]

## અદ્વૈતવાદ અસંગત

__ટીકાર્થ__ :- બેનો ભાવ = દ્વિતા તે જ દ્વૈત કહેવાય અથવા દ્વિતામા જે ઉત્પ  . દ્વૈત ન હોય તે અદ્વૈત પુરુષા

परतत्त्वमभ्युपगतं भवति बौद्धैः, तदा भव-भवविगमयोः = संसार-मोक्षयोः विभेदो मुख्यः = निरुपचरितः कथं युज्यते ? अर्थान्तरे ह्यविद्या-वासनादौ तत्त्वे भेदके सति तद्भेदः स्यात् । तदसत्त्वे तु न कथञ्चिदित्यर्थः ॥१६/७॥

पुरुषाद्वैते विशिष्टबोधमात्रे वा तत्त्वे प्रत्यक्षबाधामपीत्याह --> 'अग्नी'त्यादि ।

अग्नि-जल-भूमयो यत्परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥१६/८॥

अग्नि-जल-भूमयो वैषयिकसुखस्यापि दुःखरूपत्वात् परितापकरा = तत्त्वतो दुःखदा भवे = संसारे यद्

कल्याणकन्दली

किञ्चाऽऽत्माद्वैतमते त्वेकेनापि कर्मण्यशुभे कृते सर्वेषां शुभानुष्ठानविधायिनामपि तीव्रदुःखाभिसम्बन्धः स्यात्, आत्मन एकत्वात्, यदुक्तं सूत्रकृताङ्गे --> एवमेवंत्ति जंपंति मंदा आरंभणिस्सिया । एगे किच्चा सयं पावं तिव्वं दुक्खं नियच्छइ ॥ <-- [श्रुत स्क १।अ १। सु १०] इति । किञ्च यदि तावदद्वैतसिद्धौ प्रमाणमस्ति तर्हि तदेव द्वितीयमिति नाऽद्वैतम् । अथ नास्ति प्रमाणं तथापि नतरामद्वैतम्, अप्रामाणिकाया असिद्धेरभावात् [आ.९] इति व्यक्तमुक्तं जयन्तभट्टेन न्यायमञ्जर्याम् ।

अर्थान्तरे = पुरुष-ज्ञानव्यतिरिक्ते परमार्थसति हि अविद्या-वासनादौ = वेदान्तिसम्मतेऽविद्यापदार्थे बौद्धाभ्युपगते च वासनादौ तत्त्वे भेदके सति तद्भेदः = संसारमोक्षभेदः स्यात् ।

तदसत्त्वे = वस्तुसत्कर्मविरहे तु न कथञ्चिदिति । इदमेवाभिप्रेत्य ज्ञानाद्वैतनयनिरसने योगबिन्दौ --> बोधमात्रेऽद्वये तत्त्वे कल्पिते सति कर्मणि । कथं सदाऽस्या भावादि नेति सम्यग्विचिन्त्यताम् ॥४७७॥ <-- इत्युक्तम् । अस्याः = मुक्तेरिति, यथोक्तं प्रमाणवार्त्तिके --> नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः ॥<--[३/३] इति ।

इदमेवाभिप्रेत्य साङ्ख्यसूत्रेऽपि --> वामदेवादिमुक्तो नाऽद्वैतम् <-- [१/१५७] इत्युक्तम् । न च वामदेवादिमुक्तिरसिद्धेति वक्तव्यम्, 'वामदेवो मुक्तः शुकदेवो मुक्तः' [म.भा.शांतिपर्व-३३३] इत्यादिना महाभारते तत्प्रतिपादनात् । 'पुण्यवान् स्वर्गे जायते पापी नरके' इत्यादिव्यवस्थानुरोधादपि पुरुषनानात्वमव्याहतम्, यथोक्तं साङ्ख्यसूत्रे --> जन्मादिव्यवस्थातः पुरुषबहुत्वम् <-- [१/१४९] इति । तदुक्तं वैशेषिकसूत्रेऽपि --> व्यवस्थातो नानात्मानः <-- [ ] इति । विज्ञानाद्वैतखण्डनमपि --> न विज्ञानमात्रं, बाह्यप्रतीतेः । तदभावे तदभावाच्छून्यं तर्हि <-- [१/४२-४३] इति साङ्ख्यसूत्रादिभ्योऽवसेयम् । एतेन --> तस्माद्विज्ञानमेवास्ति, न प्रपञ्चो न संसृतिः <-- [कू.पु २/२/३९] इति कूर्मपुराणवचनमपि प्रत्याख्यातम् । तदुक्तं तत्त्वसङ्ग्रहेऽपि --> एकज्ञानात्मके पुंसि बन्ध-मोक्षौ ततः कथम् ? <-- [३३३] इति । 'आत्मैवेदं सर्वं' [७/२५/२] इति छान्दोग्योपनिषद्वचनं 'ब्रह्मैवेदं सर्वं' [२/१७] इति नृसिंहोपनिषद्वचनं 'नेह नानास्ति किञ्चन' [४/४/१९] इति बृहदारण्यकोपनिषदादिवचनं तु वैराग्यायोपकल्पते । इदमेवाऽभिप्रेत्य साङ्ख्यसूत्रे --> न श्रुति-विरोधो, रागिणां वैराग्याय तत्सिद्धेः <-- [६/५१] इत्युक्तम् ।

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> अग्नि-जल-भूमयः परितापकराः यद् भवे अनुभवसिद्धाः, रागादयश्च रौद्राः लोके असत्प्रवृत्त्यास्पदम् ॥१६/८॥

= પુરુષસંબંધી અદ્વૈત [અર્થાત્ પુરુષ સિવાય જગતમાં બીજું કશું જ ન હોય તેવું] વેદાન્તી દ્વારા સ્વીકારાયેલ પરતત્ત્વ પુરુષાદ્વૈત જ જ્યારે વાસ્તવિક હોય, અથવા બૌદ્ધો દ્વારા સ્વીકારાયેલ પરતત્ત્વ રાગાદિવાસનાશૂન્ય બોધસ્વલક્ષણસ્વરૂપ જ જ્યારે વાસ્તવિક હોય ત્યારે સંસાર અને મોક્ષનો મુખ્ય = ઉપચારરહિત ભેદ કેવી રીતે ઘટી શકે ? પુરુષસ્વરૂપ કે જ્ઞાનસ્વરૂપ પરતત્ત્વથી ભિન્ન એવું અવિદ્યા-વાસના વગેરે ભેદક તત્ત્વ હોય તો જ સંસાર અને મોક્ષનો ભેદ થઈ શકે [કે અવિદ્યાવિશિષ્ટ પુરુષ અથવા વાસનાવિશિષ્ટ જ્ઞાન = સંસાર અને અવિદ્યાશૂન્ય પુરુષ અથવા વાસનારહિત શુદ્ધ જ્ઞાન = મોક્ષ] પરંતુ સંસાર અને મોક્ષનો ભેદ કરનાર અવિદ્યા-વાસના વગેરે જ ન હોય તો કોઈ પણ રીતે સંસાર અને મુક્તિનો વાસ્તવિક ભેદ ઘટી ન શકે. [૧૬/૭]

પુરુષાદ્વૈત અથવા વાસનાશૂન્ય કેવલબોધ જ તત્ત્વ = વાસ્તવિક છે - આવું માનવામાં પ્રત્યક્ષબાધા પણ છે - એવું ગ્રંથકારશ્રી જણાવે છે.

<u>ગાથાર્થ</u> - અગ્નિ, પાણી, પૃથ્વી પરિતાપ કરનાર છે. કેમ કે સંસારમાં તે રીતે તે અનુભવસિદ્ધ છે. અને રાગ વગેરે રૌદ્ર છે, કારણ કે અસત્પ્રવૃત્તિના કારણ તરીકે લોકમાં અનુભવસિદ્ધ છે. [૧૬/૮]

<u>ટીકાર્થ</u> :- વૈષયિક સુખ પણ દુઃખસ્વરૂપ હોવાથી અગ્નિ, પાણી, પૃથ્વી દુઃખદાયી છે, કેમ કે સંસારમાં પ્રત્યક્ષથી તે રીતે તે પ્રતીત - અનુભવસિદ્ધ છે. રાગ, દ્વેષ અને મોહ રૌદ્ર-દારુણ છે, કારણ કે ખરાબ પ્રવૃત્તિઓના મૂલ કારણ તરીકે તે

१. मुद्रितप्रतौ 'च' इति पाठः ।

= यस्मात् **अनुभवसिद्धा** = प्रत्यक्षप्रतीता, **रागादय** = राग-द्वेष-मोहा **च रौद्रा** = दारुणा असत्प्रवृत्तीना = असच्चेष्टाना आस्पद = [1]मूल प्रतिष्ठा **लोके** सर्वत्रैव **अनुभवसिद्धा** । तत पुरुषाद्वैते ज्ञानाद्वैते वा प्रत्यक्षबाध इत्यर्थ । अयश्चाऽयुक्त इति । बाह्यार्थाना पुरुष इति 'ज्ञानमि ति वा नामान्तरमेव कृत स्यात् वादिभिरिति भाव ॥१६/८॥

अथ सर्वेऽप्येते बाह्या आन्तराश्च भावा परिकल्पितरूपा एवेत्याशङ्कायामिदमाह —> **परी**'त्यादि ।

**परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति । तन्मात्र एव तत्त्वे भव-भवविगमौ कथ युक्तौ ?॥१६/९॥**

**परिकल्पिता** = अवस्तुसन्त कल्पनामात्रनिर्मितशरीरा बाह्या आन्तराश्च **यदि** भवताऽभ्युपगम्यन्ते **तत** परिकल्पितत्वादेव **न सन्ति** = न विद्यन्ते **तत्त्वेन** = परमार्थेन । तथा च **कथममी** पदार्था **स्यु** = भवेयु ? न कथञ्चित् भवताऽनभ्युपगमात् । **इति** = एव **तन्मात्र एव** = पुरुषमात्रे एव **तत्त्वे** = परमार्थेऽभ्युपगम्यमाने **भव-भवविगमौ** = ससार-मोक्षौ **कथ** = केन प्रकारेण **युक्तौ** ? न कथञ्चिदित्यर्थ ॥१६/९॥

परिकल्पनाया असम्भवादपि परिकल्पिताऽसम्भव इत्याह —> '**परी**'त्यादि ।

**परिकल्पिताऽपि चैषा हन्त विकल्पात्मिका न सम्भवति । तन्मात्र एव तत्त्वे यदि वाऽभावो न जात्वस्याः ॥१६/१०॥**

**परिकल्पिता** = परिकल्पनेत्यर्थ । सा **अपि च एषा** बाह्याभ्यन्तराणामर्थाना **हन्त विकल्पात्मिका** = वस्तुशून्यनिश्चयात्मिका **न सम्भवति** = न युज्यते, **तन्मात्रे एव** = पुरुषमात्र एव ज्ञानमात्र एव च तत्त्वेऽभ्युपगम्य-

कल्याणकन्दली

**राग-द्वेष-मोहाः दारुणाः** = आत्मदूषका. कर्माभावे तदसम्भवात् । तदुक्त **योगशतके** —> रागो दोसो मोहो एत्थाऽऽयदूसणा दोसा । कम्मोदयसजणिया विण्णेया आयपरिणामा ॥५३॥ <— इति । न चैते काल्पनिका., अबाधात् । तदुक्त **साङ्ख्यसूत्रे** —> जगत्सत्यत्वम्, अदुष्टकारणजन्यत्वात्, बाधकाभावात् <— [६/५२] इति । तत्परिकल्पितत्वे दोषान्तर च वक्ष्यतेऽनुपदमेव मूलग्रन्थे ॥१६/८॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> यदि परिकल्पिता., ततः तत्त्वेन न सन्ति, कथ अमी भवेयु. ? तन्मात्रे एव तत्त्वे कथ भव-भवविगमौ युक्तौ ? ॥१६/९॥ योगदीपिका स्पष्टैवेति ॥१६/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> परिकल्पिता अपि च एषा विकल्पात्मिका हन्त न सम्भवति, तन्मात्रे एव तत्त्वे । यदि वा न जातु अस्या. अभाव ॥१६/१०॥

**विकल्पात्मिका** = वस्तुशून्यनिश्चयात्मिका, तदुक्त पातञ्जलयोगसूत्रे —> शब्दज्ञानानुपाती वस्तुशून्यो विकल्प.<—

લોકમા બધે જ અનુભવસિન્દ્ર છે તેથી પુરુષાદ્વૈત કે જ્ઞાનાદ્વૈતને માનવામા તો પ્રત્યક્ષથી બાધ છે [પુરુષથી ભિન્ન પૃથ્વી વગેરે અને જ્ઞાનથી ભિન્ન રાગાદિ અનુભવસિન્દ્ર છે] માટે આ અદ્વૈતવાદ અયુક્ત છે બાકી વાદી દ્વારા [પ્રત્યક્ષસિદ્ધ] બાહ્ય અર્થનુ પુરુષ અને જ્ઞાન એમ બીજુ નામ જ કર્યુ ગણાશે - એ તાત્પર્ય છે [૧૬/૮]

—> 'આ બધા બાહ્ય અને આતરિક ભાવો પરિકલ્પિતસ્વરૂપ જ છે' <— આવી શકા થાય તો ગ્રથકારશ્રી આ વાત જણાવે છે કે —

**ગાથાર્થ** ·- જો આ પરિકલ્પિત હોય તો પછી પરમાર્થથી છે જ નહિ તેથી આ પદાર્થો કેવી રીતે ઘટી શકે ? પુરુષ જ કેવળ તત્ત્વ = પારમાર્થિક હોય તો પછી સસાર અને મોક્ષ કેવી રીતે ઘટી શકે ? [૧૬/૯]

**ટીકાર્થ** - બાહ્ય અને અભ્યતર પદાર્થ અવાસ્તવિક = કલ્પના માત્રથી નિર્મિત શરીરવાળા આપના દ્વારા સ્વીકારવામા આવે તો પછી કાલ્પનિક હોવાના કારણે જ પરમાર્થથી તે વિદ્યમાન નથી તો પછી આ પદાર્થો કેવી રીતે ઘટી શકે ? કારણ કે આપે તો કોઈ પણ રીતે તેને સ્વીકારેલ નથી આથી પુરુષમાત્ર જ તત્ત્વ સ્વીકારવામા આવે તો સસાર અને મોક્ષ કેવી રીતે યુક્તિસગત થશે ? કોઈ પણ રીતે નહિ થાય - એ ભાવ છે [૧૬/૯]

કલ્પના પણ સભવી ન શકવાથી કાલ્પનિક પદાર્થનો પણ સભવ નથી - આ વાતને જણાવતા ગ્રથકાર કહે છે કે —

**ગાથાર્થ** - વિકલ્પાત્મક આ પરિકલ્પના પણ સભવતી નથી, જો તન્માત્ર જ તત્ત્વ હોય તો અથવા ક્યારેય પણ પરિકલ્પનાનો અભાવ નહિ થાય [૧૬/૧૦]

१ मुद्रितप्रतो - 'मूलप्रतिष्ठा' इति पाठ ।

माने, तदतिरिकेणेतरपरिकल्पनाबीजपदार्थाभावादित्यर्थः ।

अभ्युपगम्य परिकल्पिता दूषणान्तरमाह - यदि वा अभाव = असम्भवो न = नैव जातु = कदाचिदपि अस्या = परिकल्पनाया स्यात् । यदि निर्बीजाऽपीय बाह्याभ्यन्तरपदार्थपरिकल्पनेष्यते तदा संसारदशायामिव मुक्तावपीयं भवेदिति भाव । ततश्च संसारमोक्षभेदानुपपत्ति परिकल्पनाबीजसद्भावाभ्युपगमे तु पुरुषबोधस्वलक्षणव्यतिरिक्तवस्त्वन्तरसिद्ध्या प्रस्तुताऽद्वैतपक्षद्वयहानि ॥१६/१०॥ एवं परपक्षं निरस्य स्वोक्तत्रयसमर्थनायाऽऽह --> तस्मादि'त्यादि ।

**तस्माद्यथोक्तमेतत्त्रितयं नियमेन धीधनैः पुम्भिः । भव-भवविगमनिबन्धनमालोच्यं शान्तचेतोभिः ॥१६/११॥**

**तस्मात् यथोक्तमेतत् त्रितय** = जीव-कर्म-तथाभव्यत्वरूप **नियमेन** = नियोगेन **धीधनै** = बुद्धिधनै **पुम्भि**

कल्याणकन्दली

[१/९] यथा --> एष वन्ध्यासुतो याति खपुष्पकृतशेखर । मृगतृष्णाम्भसि स्नात शशशृङ्गधनुर्धर ॥ <-- [ ] इत्याद्याकारिका । तदतिरेकेण = पुरुषव्यतिरेकेण ज्ञानभिन्नत्वेन वा इतरपरिकल्पनाबीजपदार्थाभावात् = वास्तविकत्वे सति पृथिवीजलाग्नि-राग-द्वेष-मोह-विकल्पादे' कल्पनाविषयीभूतस्य पदार्थस्य विरहात् । मिथ्याऽविद्याया वासनापराभिधानाया निरासस्तु मत्कृतजयलताया अवसेय ॥१६/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> तस्मात् यथोक्त एतत् त्रितय भव-भवविगमनिबन्धन शान्तचेतोभि धीधनै. पुम्भि नियमेन आलोच्यम् ॥१६/११॥

जीव-कर्म-तथाभव्यत्वरूपमिति । आद्यान्तिमे निरूपिते । कर्ममीमांसा चाधुना नानातन्त्रानुसारेण क्रियते । तथाहि वेदान्तिभि ब्रह्मस्वरूपो जीवस्त्वभ्युपगम्यते एव । एव कर्माऽपि स्वीकर्तव्यम्, यथोक्त शिवोपनिषदि --> न कश्चित् कस्यचिन्छक्त कर्तुं दु ख सुखानि च । करोति प्राक्तन कर्म मोहाल्लोकस्य केवलम् ॥१११॥ <--, श्वेताश्वतरोपनिषदि --> कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते <-- [५/११], प्रश्नोपनिषदि --> अथैकयोर्ध्व उदान' पुण्येन पुण्य लोक नयति । पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ <-- [३/७], बृहदारण्यकोपनिषदि --> पुण्यो वै पुण्येन कर्मणा भवति, पाप पापेन <-- [३/२/१३], --> न साधुना कर्मणा भूयान् नो एवाऽसाधुना कनीयान् <-- [३/८] इति च कौषीतक्युपनिषदि । न च सर्वत्रैव प्रवृत्तिपर कर्मपदमिति वक्तव्यम्, प्रवृत्ते चिरकालाऽस्थायित्वेन फलादानेऽप्रत्यलत्वात्, तदुक्त न्यायकुसुमाञ्जलौ उदयनेन --> चिरध्वस्त फलायाल न कर्माऽतिशय विना [१/९] । किञ्चैव --> 'चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् <-- [६/३०] इति मैत्रायण्युपनिषद्वचनमपि कथं सङ्गच्छते ? प्राक् नष्टस्य पुनर्मन प्रसादेन नाशाऽसम्भवात् । --> ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ' <-- [४/३७] इति प्राक् [पृष्ठ-३१०] दर्शित भगवद्गीता-

## ❋ કલ્પનાની કલ્પના અયોગ્ય ❋

**टीकार्थ** - બાહ્ય અને અભ્યન્તર પદાર્થોની પરિકલ્પના પણ સભવતી નથી, જો કેવલ મુખ્ય પુરુષાદ્વૈત અથવા કેવળ જ્ઞાન = જ્ઞાનાદ્વૈત જ તત્ત્વ સ્વીકારો તો કારણ કે પુરુષ = બ્રહ્મ અથવા જ્ઞાનથી અતિરિક્ત કોઈ ચીજ જ નથી, કે જે પરિકલ્પનાનુ બીજ = કારણ બની શકે પરિકલ્પના = કલ્પના = વસ્તુશૂન્ય નિશ્ચય [જેમ કે 'આ વધ્યાપુત્ર જાય છે' એવો નિશ્ચય વધ્યાપુત્ર દુનિયામા છે નહિ, છતા તેનો નિશ્ચય એ વિકલ્પ કહેવાય] પરિકલ્પનાનો સ્વીકાર કરીને શ્રીમદ્જી બીજો દોષ આપે છે કે અથવા ક્યારેય પણ પરિકલ્પનાનો અભાવ નહિ થાય જો કારણ વગર પણ બાહ્ય-આતરિક પદાર્થોની આ પરિકલ્પના માન્ય હોય તો સસાર અવસ્થાની જેમ મોક્ષમા પણ આ પરિકલ્પના થશે-એ આશય છે તેથી સસાર અને મોક્ષનો ભેદ ન ઘટી શકે [અહીં અદ્વૈતવાદી તરફથી એવી દલીલ કરવામા આવે કે --> સસારદશામા કલ્પનાનુ કારણ હોવાથી સસાર અવસ્થામા બાહ્ય-આતરિક પદાર્થોની કલ્પના થશે મોક્ષ અવસ્થામા કલ્પનાનુ કારણ ન હોવાથી મોક્ષદશામા કલ્પના નથી હોતી માટે સસાર અને મોક્ષનો ભેદ સભવી શકે છે <-- તો તે બરાબર નથી, કારણ કે] કલ્પનાનુ કારણ વાસ્તવિક છે એવુ સ્વીકારવામા આવે તો કેવલ પુરુષ કે કેવળ સ્વલક્ષણબોધથી ભિન્ન અન્ય વસ્તુની = કલ્પનાકારણની સિદ્ધિ થવાથી પ્રસ્તુત અદ્વૈતપક્ષની હાનિ = ત્યાગ થશે [તેથી અદ્વૈતસિદ્ધાતનો ભગ થશે] [૧૬/૧૦]

આ રીતે પરપક્ષનુ નિરાકરણ કરીને પોતે જણાવેલ ૩ વસ્તુના સમર્થન માટે ગ્રથકારશ્રી જણાવે છે કે —

**ગાથાર્થ** :- માટે યથોક્ત આ ત્રણ વસ્તુ સસાર-મોક્ષનુ કારણ છે-એવુ શાત મનવાળા બુદ્ધિશાળી પુરુષોએ નિયમા વિચારવુ જોઈએ [૧૬/૧૧]

**टीकार्थ** :- માટે યથોક્ત જીવ, કર્મ અને તથાભવ્યત્વસ્વરૂપ ત્રણ વસ્તુ સસાર અને મોક્ષ [ની વ્યવસ્થા] નુ કારણ છે-

= पुरुषैः **भव-भवविगमनिबन्धनं** = संसार-मोक्षकारणं **आलोच्य** = सम्यग् भावनीयं **शान्तचेतोभिः** = अरक्तद्विष्ट-चित्तैः ॥१६/११॥ ननु चागमप्रामाण्यमवलम्बमानैः पुरुषाद्वैतं ज्ञानाद्वैतं वा यदेष्यते तदा को दोषः ? आगमानु-सारेणैव युक्तिप्रवर्तनस्य न्याय्यत्वादित्यत आह --> **'ऐदम्पर्यमि'**त्यादि ।

**ऐदम्पर्यं शुध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथाग्रहणात् ॥१६/१२॥**

**कल्याणकन्दली**

**वचनम**पि पुण्यपापलक्षणस्याऽदृष्टापराभिधानस्य कर्मणोऽनुपगमे न सङ्गतिमङ्गेत् । कर्म-पुण्य-भाग्यादेः पर्यायत्वात् यथोक्तं --> भाग्यानि पुण्यानि यमः कृतान्तः पर्यायनामानि पुराकृतस्य <-- [ ] इति । इत्थमेव --> तथैवात्मनि कर्माणि तिष्ठन्ति भरतर्षभ !<-- [२/६७] इति **इतिहाससमुच्चयवचनम**पि उपपद्यते । प्रकृते --> शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ <-- [१२/३] इति **मनुस्मृतिवचनं**, --> अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः । दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च ॥ <-- [३/१३०] इति **याज्ञवल्क्यस्मृति**वचनं, --> कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते' <-- [९/८/५३] इति **कूर्मपुराण**वचनं, --> अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु <-- [२/१३/७०] इति **विष्णुपुराण**वचनं, --> यथा छायातपौ नित्यं सम्बद्धौ च परस्परम् । तद्वत्कर्म च कर्ता च सुसम्बद्धौ परस्परम् ॥ <-- [२/८१/५१] इति **पद्मपुराण**वचनं, --> नो मृत्तिका नैव जलं नाप्यग्निः कर्मशोधनम् । शोधयन्ति बुधाः कर्म ज्ञानध्यानतपोजलैः ॥ <-- [३८/११] इति **मत्स्यपुराण**वचनं, --> 'कर्मणो हि प्रधानत्वं किं कुर्वन्ति शुभा ग्रहाः । वशिष्ठदत्तलग्नोऽपि रामः प्रव्रजितो वने ॥ <-- [अरण्यकाण्ड- अ ९/१५] इति **आध्यात्मिकरामायण**वचनं, --> 'एवं लोकः परं विद्यान्नश्वरं कर्मनिर्मितम् <-- [११/३/२७] इति **श्रीमद्भागवत**वचनं, --> कश्चिद् धनी दरिद्रश्च कश्चिदेव हि कर्मणा <-- [१/३/२२] इति **नारद-पञ्चरात्र**वचनं, --> तत्रास्य स्वकृतं कर्म छायेवानुगतं सदा । फलत्यथ सुखार्हो वा दुःखार्हो वाऽथ जायते ॥ <-- [वनपर्व २३०/७८] इति च **महाभारत**वचनमपि संवदन्ति । तत्रैव --> यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुधावति ॥ <-- [१८१/१६] इत्युक्तम् । एवं --> कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ <-- [को स २३/३९] इति **शिवपुराण**वचनमपि निकाचितकर्मापेक्षया सङ्गच्छत एव ।

**बौद्धदर्शने**ऽपि कर्म सम्मतमेव, तदुक्तं **धम्मपदग्रन्थे** --> न अन्तलिक्खे न समुद्दमज्झे न पब्बतानं विवरं पविस्स । न विज्जती सो जगतिप्पदेसो यत्रट्ठितो मुञ्चेय्य पापकम्मा ॥ <-- [९ पापवर्ग/१२], --> कम्मविपाकेन इदं दुक्खं निगच्छति <-- [४/१६/७] इति **पेतवत्थुग्रन्थे** --> नानाकम्मेहि महाराज ! निब्बत्तानि, न एकेन कम्मेन <-- [परि ३ विमतिच्छेदनपञ्हो-पृ ६८] इति **मिलिन्दप्रश्ने**, --> कम्मना वत्तती लोको कम्मना वत्तती पजा । कम्मनिबंधना सत्ता रथस्साणीव यायतो ॥ <-- [महावग्ग ३, ९ वासेट्ठसुत्त- श्लो ६०] इति **सुत्तनिपाते महावग्गे**, --> एवं कम्मे विपाके च वत्तमाने सहेतुके बीज-रुक्खादिकानं व पुब्बा कोटि न नायति ॥ <-- [१९/२०-पृ.४२६] इति **विसुद्धिमग्गग्रन्थे**, --> कर्मजं लोकवैचित्र्यम् <-- [कर्मनिर्देश ४/का १] इति **अभिधर्मकोशे**, --> कर्माणि हि कुशलाकुशलादीनि भवन्ति, तेभ्य एव लोके वस्तूनामुत्पादः, इत्थं हेतुवैचित्र्यात् फलवैचित्र्यम् <-- [पृ ८५] इति च **अभिधर्मकोशनालन्दिकायां** । **मज्झिमनिकाये**ऽपि --> कम्मस्स विपाकेन बहूनि वस्सानि, बहूनि वस्ससतानि, बहूनि वस्ससहस्सानि निरये पच्चेय्यासि <-- [अङ्गुलिमालसुत्त-३०६] इत्युक्तम् । एवं --> इतः एकनवतौ कल्पे शक्त्या मे पुरुषो हतः । तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥ <-- [ ] इति स्वशिष्यान् प्रति बौद्धोक्तिरपि कर्मसाधिकैवेति **दिक्** ॥१६/११॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> यत्र ऐदम्पर्यं शुध्यति असौ आगमः सुपरिशुद्धः । तदभावे अन्यथाग्रहणात् तद्देशः कश्चित् स्यात्, ॥१६/१२॥

એવું રાગ-દ્વેષરહિત ચિત્તવાળા મતિધન પુરુષોએ નિયમા સમ્યગ્ રીતે વિભાવન-ચિંતન કરવું જોઈએ [૧૬/૧૧]

અહીં એવી શંકા થાય કે --> આગમના પ્રામાણ્યનું અવલંબન કરતા પુરુષો જ્યારે પુરુષાદ્વૈત કે જ્ઞાનાદ્વૈતને સ્વીકારે ત્યારે શું દોષ સંભવે ? આગમના અનુસારે જ પ્રવર્તતી યુક્તિ ઉચિત છે [તેથી અદ્વૈતવાદસ્થાપક આગમને પ્રતિકૂળ તમે જે દલીલ કરી છે તે વ્યાજબી નથી] <-- તો તેના સમાધાન માટે ગ્રંથકારશ્રી જણાવે છે કે --

**<u>ગાથાર્થ</u>** :- જ્યાં ઐદંપર્ય શુદ્ધ થાય તે આગમ સુપરિશુદ્ધ જાણવા. તે ન હોય તો અન્ય પ્રકારે ગ્રહણ કરવાના લીધે મૂલાગમનો તે કોઈક એક દેશ-ભાગ બને [૧૬/૧૨]

**ऐदम्पर्यं** = प्रकृतार्थोपपत्तितात्पर्यं यत्र आगमे **शुध्यति** = निर्वहति **असौ आगम सुपरिशुद्ध** = प्रमाणभूत तात्पर्यार्थपर्यन्त प्रमाणशब्दव्यापारात् **तदभावे** = ऐदम्पर्यशुद्ध्यभावे **तद्देश** = परिशुद्धागमैकदेशार्थगर्भ **कश्चित्** अन्य आगम **स्यात्** न तु मूलाऽऽगम एव **अन्यथाग्रहणात्** = मूलागमैकवाक्यस्य कस्यचिद्वचनस्य तदेकवाक्यतानापन्नवाक्यान्तरमिश्रितत्वेन वैपरीत्येन ग्रहणात् । अत एवैदम्पर्यार्थान्वेषिण समतामवलम्बमाना तीर्थिका' अपि तदर्थविरुद्धवाक्यार्थाननुप्रवेशेन यावदुपपन्नमिच्छन्ति, न तु मिथ्यैकान्तेन ॥१६/१२॥

नन्वेवमन्यथाप्रतिपन्नमूलागमैकदेशगर्भपरतन्त्रे द्वेष कार्यो न वा ? इत्याशङ्कायामाह —> **'तत्रापी'त्यादि ।**

**तत्राऽपि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत् ॥१६/१३॥**

## कल्याणकन्दली

पदार्थत आरभ्य तात्पर्यार्थपर्यन्त प्रमाणशब्दव्यापारात् । इषुदृष्टान्तेन प्रागेव [११/९ पृ २६३] व्याख्यातमिदम् । ऐदम्पर्यशुद्ध्यभावे = तात्पर्यार्थस्य दृष्टेष्टाभ्या बाधितत्वे परिशुद्धागमैकदेशार्थगर्भ· = दृष्टेष्टाबाधिततात्पर्यार्थकागमैकपदार्थादिसवलित अन्य आगमः स्यात्, न तु मूलागम एव, मूलागमैकवाक्यस्य = मूलागमेन सह वाक्यैकतामापन्नस्य कस्यचिद् वचनस्य तदेकवाक्यतानापन्नवाक्यान्तरमिश्रितत्वेन = मूलागमैकवाक्यतानापन्नाऽन्यवाक्याऽन्न पतितत्वेन वैपरीत्येन ग्रहणात् । अत एव = ऐदम्पर्यशुद्धिविकलवचनस्य परिशुद्धागमैकदेशत्वादेव, ऐदम्पर्यार्थान्वेषिण· = तात्पर्यार्थगवेषिण. स्वेतरागमेषु समतामवलम्बमाना· तीर्थिका अपि तदर्थविरुद्धवाक्यार्थाननुप्रवेशेन = मूलागमैदम्पर्यार्थविरुद्धवचनामिश्रितत्वेन यावदुपपन्न = यावत् मार्गानुसारिप्रकृष्टक्षयोपशमग्राह्य दृष्टेष्टाऽविरुद्धार्थं इच्छन्ति, न तु मिथ्यैकान्तेन = विपरीताभिनिवेशेन । अध्यात्मोपलब्धौ सत्या तत्राविरुद्धत्वभानमेव स्यात् । तदुक्त अध्यात्मगीताया —> परस्परविरुद्धा या अप्रदृष्ट्या धर्मदृष्टय । अविरुद्धा भवन्त्येव सम्प्राप्याध्यात्मवेदिनम् ॥२२१॥ <— इति । —> यत्साङ्ख्यै प्राप्यते स्थान तद्योगैरपि गम्यते । एक साङ्ख्यञ्च योगञ्च य पश्यति स पश्यति ॥[गी ५/५ प द ९/१३४] इति भगवद्गीता-पञ्चदशीप्रभृतिवचनमत्रोदाहरणतया विभावनीयम् । ऐदम्पर्यार्थगवेषणान्वि-तसमतावलम्बनमेवाभिप्रेत्य सदन्धन्याय योगबिन्दौ [३०४/३०५] प्रदर्शित इति ध्येयम् । विपरीताभिनिवेशे तु तत्त्वभ्रान्तत्वैव । इदमेवाभिप्रेत्य योगसारे —> धर्मस्य बहुधाऽध्वानो लोके विभ्रमहेतव । तेषु बाह्यफटाटोपात्तत्त्वविभ्रान्तदृष्टय ॥ स्वस्वदर्शनरागेण विवदन्तो मिथो जना । सर्वथैवात्मनो धर्म मन्यन्ते न परस्य तु ॥ <—[२/३४-३५] इत्युक्तम् ॥१६/१२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> तत्र अपि च द्वेष न कार्य., विषयस्तु यत्नतो मृग्य , यत् तस्य अपि सर्व सद्वचन न प्रवचनात् अन्यत् ॥१६/१३॥

## ॥ મૂલાગમના એક ભાગને જાણીએ ॥

__ટીકાર્થ__ :- પ્રસ્તુત અર્થની સગતિ કરે તેવા તાત્પર્ય-ઐદંપર્યનો જે આગમમા નિર્વાહ થતો હોય તે આગમ સુપરિશુદ્ધ = પ્રમાણભૂત છે, કારણ કે તાત્પર્યાર્થ પર્યંત પ્રમાણભૂત શબ્દનો વ્યાપાર છે જો તાત્પર્યશુદ્ધિ ન હોય તો પરિશુદ્ધ આગમના એક ભાગના અર્થથી ગર્ભિત કોઈક અન્ય આગમ થશે, નહિ કે મૂલાગમ જ આનુ કારણ એ છે કે તેમા અન્ય પ્રકારે અર્થનુ ગ્રહણ થાય છે મતલબ કે મૂલાગમના કોઈક વાક્યને તેની સાથે એકવાક્યતાઅનાપન્ન અન્ય વાક્યથી મિશ્રિતરૂપે = વિપરીતરૂપે પકડવાના લીધે તે મૂલાગમ નહિ પણ મૂલાગમના એક ભાગથી ગર્ભિત અન્ય આગમ સ્વરૂપ બને છે [દા ત મૂલાગમનુ અર્થવાદપરક કોઈક વાક્ય હોય તેને વિધિવાદરૂપે પકડે અપવાદવાક્યને ઉત્સર્ગવાક્ય રૂપે જણાવે તો વિપરીતરૂપે ગ્રહણ કરવાના લીધે તેને મૂલાગમ ન કહેવાય, પરતુ મૂલાગમના એક ભાગથી ગર્ભિત અન્ય આગમ કહેવાય માટે તે મૂલાગમની જેમ પ્રમાણભૂત ન કહી શકાય ] માટે જ ઐદંપર્યાર્થની ગવેષણા = શોધ કરતા, સમતાને ધારણ કરતા અન્ય દર્શનીઓ પણ મૂલાગમના અર્થને વિરોધી હોય તેવા વાક્યોના અર્થમા પ્રવેશ કર્યા વિના જેટલુ સગત હોય તેને સ્વીકારે છે, નહિ કે મિથ્યા એકાતવાદથી-કદાગ્રહથી [મતલબ કે તાત્પર્યાર્થની ગવેષણા કરનાર મધ્યસ્થવૃત્તિવાળા અન્યદર્શનીઓ પણ મૂલાગમના = જૈનાગમના અર્થને વિરોધ ન આવે તે રીતે પોતાના દર્શનશાસ્ત્રમા કહેલા પદાર્થને સ્વીકારે છે યુક્તિસગત ન હોય કે મૂલાગમવિષયક ન જ હોય તેવા પણ પોતાના શાસ્ત્રમા કહેલા પદાર્થોને પોતાના દર્શનશાસ્ત્રમા કહેલુ હોવાથી જડતાથી સ્વીકારે તેવુ ન કરે તે પદાર્થો પ્રત્યે પોતે ઉપેક્ષા રાખે રમણમહર્ષિ, અરવિંદઘોષ, રામકૃષ્ણ પરમહસ વગેરે આના દષ્ટાત તરીકે લેવા અમને ઉચિત લાગે છે ] [૧૬/૧૨]

—> 'જો આવુ હોય તો અન્ય પ્રકારે સ્વીકારેલ મૂલાગમદેશગર્ભિત અન્ય દર્શન અને પરદર્શનીના શાસ્ત્ર ઉપર દ્વેષ કરવો કે નહિ ?' <— આ શકા ઉપસ્થિત થતા ગ્રથકારશ્રી કહે છે કે —

__ગાથાર્થ__ :- તેના ઉપર પણ દ્વેષ ન કરવો પરતુ તેના વિષયની પ્રયત્નપૂર્વક ગવેષણા કરવી, કારણ કે તેના પણ સારા બધા વચનો મૂલાગમથી ભિન્ન નથી [૧૬/૧૩]

' मुद्रितप्रतौ 'अन्यतीर्थिका' इति पाठ ।

**तत्रापि** = तदेकदेशभूताऽऽगमान्तरेऽपि **न द्वेष कार्य, तु** = पुन **विषयो यत्नतो मृग्य** = तदर्थानुपपत्ति-परिहारो यत्नत कर्तव्य, [1]तथागुणग्रहरसिकाना परवचनानुपपत्तिपरिहारप्रवणस्वभावत्वात् ।

**ननु** वस्तुत उपपन्नार्थवचनस्यानुपपत्तिशङ्का परिहार्या, न तु सर्वथाऽनुपपन्नस्येति निर्विषयोऽयमुपदेश इत्यत आह-**तस्यापि** आगमान्तरस्य **सद्वचन** = शोभन वचन **सर्वं यत्** = यस्मात् **प्रवचनात्** = मूलागमात् **अन्यत् न**, किन्तु **तदनुपात्येव** । तथा च तस्य मूलागमेनैकवाक्यतामापाद्योपपत्तिरेव कर्त्तव्या । इत्थमेव सम्यग्दृष्टिपरि-गृहीतस्य मिथ्याश्रुतस्यापि सम्यक्श्रुतत्वसिद्धे । तदरुचिस्तु तत्त्वतो दृष्टिवादाऽरुचिपर्यवसायिनीति सुप्रसिद्धमुप-देशपदादौ ॥१६/१३॥

कल्याणकन्दली

**तदर्थानुपपत्तिपरिहारः** = मूलागमैकदेशतामापन्नस्य परतीर्थिकागमस्य वाच्यार्थाद्यसङ्गतिव्यपोह. **यत्नतः कर्तव्यः; तथा-गुणग्रहरसिकाना** = मूलागमैकवाक्यतानापन्नता-निरपेक्षवाक्यमिश्रितत्व-विपरीतापेक्षाभिमुख्य-मिथ्याभिनिवेशादिप्रयुक्तार्थाऽ-सङ्गतिनिराकरणपूर्वं मूलागमैकवाक्यतापन्नत्व-साकाङ्क्षवाक्यसम्बद्धत्व-यथार्थापेक्षाप्रेक्षित्वाऽसदभिनिवेशराहित्यादिद्वारा मूलागमैक-देशभूते परतीर्थिकागमेऽर्थतथात्वनिबन्धनप्रामाण्यप्रेक्षणप्रवीणाना **परवचनानुपपत्तिपरिहारप्रवणस्वभावत्वात्** ।

इत्थमेव दृष्टिवादोपदेशिकीसज्ञाया· सम्यग्दृष्टित्वव्यापकीभूतायाः साफल्यात् । **तदनुपात्येव** = मूलागमानुगाम्येव, यथा **मोक्षधर्मे** –> यथा नागपदेऽन्यानि पदानि पदगामिनाम् । सर्वाण्येवाऽपि धीयन्ते पदजातानि कौञ्जरे । एव मर्वमहिंसाया धर्मार्थमपि धीयते ॥ <– [२४५/१८-१९] इति वचनम् । **भागवते** –> यमानऽभीक्ष्ण सेवेत <– [११/१०/५] इति वचनम् । **विष्णुपुराणे** –> या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यताम् । ता तृष्णा सत्यजन् प्राज्ञः सुखेनैवाभिपूर्यते ॥ <– [४/१०/२२] इति वचनम् । **भगवद्गीताया** –> वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता <– [२/६१] इति वचनम् । ध्यानाधिकारे **गरुडपुराणे** –> स्थित्यर्थ मनस. पूर्व स्थूलरूप विचिन्तयेत् । तत्र तन्निश्चलीभूत सूक्ष्मेऽपि स्थिरता व्रजेत् ॥ <– [१/२२७/३३] इति वचनम् । **मनुस्मृतो** –> घोरेऽस्मिन् हन्त ' ससारे नित्य सततघातिनि । कदली-स्तम्भनि·सारे ससारे सारमार्गणम् ॥ य. करोति स सम्मूढो जलबुद्बुदसन्निभे <– [१/५०] इति वचनम् ।

**तथा च** = परतीर्थिकाऽऽगमगतसकलसद्वचनस्य मूलागमान्त.पातित्वाच्च **तस्य** = मूलागमैकदेशात्मकस्य परागमस्य **मूलागमेन** साक **एकवाक्यता** = सदपेक्षाविष्करणादिद्वारा अविसवादिवाक्यता यद्वा **एकवाक्यता** = अङ्गाङ्गिभाव **आपाद्य उपपत्तिरेव कर्तव्या** । इदमेवाभिप्रेत्य **अध्यात्मगीताया** –> जैनधर्मो नयै. सर्वै युक्तो वैराट् प्रभु स्वयम् । तदङ्गा. सर्वधर्माः स्युर्भाषित पूर्वसूरिभि. ॥४२६॥ <– इत्येव श्रीबुद्धिसागरसूरिभिरुक्तम् । **इत्थमेव** = परतीर्थिकागमेऽपि मूलागमैकवाक्यताद्वारा प्रामाण्यसत्त्वादेव **सम्यग्दृष्टिपरिगृहीतस्य मिथ्याश्रुतस्यापि सम्यक्श्रुतत्वसिद्धे**·, मूलागमविशकलितत्वादिप्रयुक्तमिथ्यात्वप्रच्यवात् । मिथ्याश्रुतस्य सम्यक्श्रुतत्वभवन तु तत्र तत्र परतन्त्रसवादस्थले शतश इहैवास्माभि प्रदर्शित तदभिप्रायाविष्कारपूर्वकमिति । **तदरुचिस्तु** = मूलागमैकदेशात्मकपरागमाऽरुचिस्तु **तत्त्वतः दृष्टिवादारुचिपर्यवसायिनी इति सुप्रसिद्ध उपदेशपदादौ** । तदुक्त **उपदेशपदे** –> ज अत्थओ अभिण्ण अण्णत्था सद्दओ वि तह चेव । तम्मि पओसो मोहो विसेसओ जिणमयठियाण ॥६९३॥

## ❀ અન્ય ધર્મના શાસ્ત્રો ઉપર પણ દ્વેષ ન રાખવો ❀

<u>ટીકાર્થ</u> :- મૂલાગમના એક દેશસ્વરૂપ અન્યદર્શનીઓના શાસ્ત્ર-આગમ ઉપર પણ દ્વેષ ન કરવો પરતુ પ્રયત્નપૂર્વક તેનો વિષય શોધવો અર્થાત્ તેના અર્થની અનુપપત્તિ-અસગતિ [ની શકા]નો પરિહાર પ્રયત્નપૂર્વક કરવો, કારણ કે ગુણને પકડવાના રસિયા લોકો બીજાના વચનની અસગતતાનો પરિહાર કરવામા નિપુણ સ્વભાવવાળા હોય છે

અહીં શકા થાય કે –> જે વચનનો અર્થ વાસ્તવમા સગત-ઉપપન હોય તે વચનની અસગતિની શકાનો પરિહાર કરવો જોઈએ પરતુ 'જે વચન સર્વથા અનુપપન્ન = અસગત હોય તેની અસગતિનો પરિહાર કરવો જોઈએ' - આ ઉપદેશ નિર્વિષયક = અનુચિત = નિરર્થક છે <– તો તેના પરિહાર માટે શ્રીમદ્ ગ્રથકારશ્રી કહે છે કે અન્યદર્શનીના = ધર્મીના આગમ-શાસ્ત્રના સારા બધા વચનો મૂલાગમથી ભિન નથી, પરતુ મૂલાગમને અનુસરે જ છે માટે અન્ય ધર્મીના = જૈનેતરના આગમ-શાસ્ત્ર વચનની મૂલાગમની સાથે એકવાક્યતાને લાવીને તેની સગતિ જ કરવી જોઈએ આ રીતે જ સમ્યગ્દૃષ્ટિ જીવે ગ્રહણ કરેલ મિથ્યાશ્રુત પણ સમ્યક્શ્રુત બને છે જૈનેતર ધર્મશાસ્ત્ર ઉપરની અરુચિ વાસ્તવમા ૧૨મા અગ દૃષ્ટિવાદ - જૈનાગમ - મૂલાગમવિષયક જ તિરસ્કાર-આશાતનામા ફલિત થાય માટે તેનો અપલાપ કરવો યોગ્ય નથી આ વાત ઉપદેશપદ વગેરે ગ્રથોમા પ્રસિદ્ધ છે [અલબત્ત જૈનેતર આગમમા મૂલ આગમથી જુદુ-વિરુદ્ધ હોય તે બધુ જ સદ્વચન-પ્રમાણવચન નથી યથાર્થ વસ્તુવ્યવસ્થાને બનાવનાર

1 मुद्रितप्रतौ 'तथा' पद नास्ति ।

उक्ताऽद्वेषस्यैव तत्त्वज्ञानानुकूलतामभिधातुमाह —> 'अद्वेष'इत्यादि।

**अद्वेषो जिज्ञासा शुश्रूषा श्रवण-बोध-मीमासाः । परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥१६/१४॥**

(१) **अद्वेष** = पक्षपातकृताऽप्रीतिपरिहार तत्त्वविषय । (२) **जिज्ञासा** = तत्पूर्विका तत्त्वज्ञानेच्छा । (३) **शुश्रूषा** = बोधश्रोत सिराकल्पा तत्त्वजिज्ञासापूर्विका । (४) **श्रवण**[१] = तत्त्वशुश्रूषानिवन्धनतत्त्ववचनाऽऽकर्णनम् । (५) **बोध** = श्रवणनिवन्धनतत्त्वपरिच्छेद । (६) **मीमासा** = बोधानन्तरभावितत्त्वविचाररूपा, तत श्रवणादिपदाना

कल्याणकन्दली

<— इति प्राक् [पृ १०३, २६५] निरूपितमेव । तत्तन्नय-कालभेदादिक पुरस्कृत्य प्रवर्तनात् मूलागमैकदेशभूते परसमये वैचित्र्यावभासेऽपि तत्प्रतिक्षेपो न हिताय । तदुक्त **योगदृष्टिसमुच्चये** —> यद्वा तत्तन्नयापेक्षा तत्तत्कालादियोगत । ऋषिभ्यो देशना चित्रा तन्मूलैषाऽपि तत्त्वतः ॥१३८॥ तदभिप्रायमज्ञात्वा न ततोऽर्वाग्दृशा सताम् । युज्यते तत्प्रतिक्षेपो महानर्थकर. पर. ॥१३९॥ <— इत्यादि प्राक् [पृष्ठ-२४] दर्शितमेव । ततश्च 'परसमय एकान्तेनाऽसन्नेव' इति मोहः विपश्चिता न सम्भवति, तत्त्वहाने. । तदुक्त **योगविन्दौ** —> आत्मीय परकीयो वा क सिद्धान्तो विपश्चिताम् । दृष्टेष्टाऽबाधितो यस्तु युक्त-स्तस्य परिग्रह. ॥५२५॥ <— इति । —> सर्वदर्शनभेदेषु विरुद्धेषु सुपण्डिता. । रागद्वेषा न कुर्वन्ति शुद्ध-ब्रह्मोपयोगिन. ॥६३॥ परस्परविरुद्धेषु धर्मेषु ब्रह्मवेदिन. । यत्सत्य तत्प्रगृह्णन्ति सापेक्षनयदृष्टित. ॥६५॥ सर्वदर्शनधर्मेषु सत्यस्य तारतम्यता । विद्यतेऽत. प्रजीवन्ति जीवत्स्वरूपशक्तित. ॥६६॥ <— इत्येव **अध्यात्मगीतावचनान्यप्यत्रानुसन्धेयानि** । यथा चैतत्तत्त्व तथा प्राक् [४/११ पृ १०४] निरूपितमेव ॥१६/१३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> [१]अद्वेष , [२]जिज्ञासा, [३]शुश्रूषा, [४]श्रवण- [५]बोध- [६]मीमासा , [७]परिशुद्धा प्रतिपत्ति , [८]प्रवृत्ति इति तत्त्वे अष्टाङ्गिकी प्रवृत्ति ॥१६/१४॥ इयञ्च कारिका **योगदृष्टिसमुच्चयवृत्त्यधिकारविंशिकावृत्त्यादौ** [यो गा १६ वि गा १२] समुद्धृता वर्तते ।

[१] **अद्वेष**· = **पक्षपातकृताप्रीतिपरिहार**· तत्त्वविषय इति । स्वाभिमतपदार्थगोचराभिलापातिरेकप्रयुक्ता या तदितरतत्त्व-विषयिणी अप्रीति तस्या परिहार इत्यर्थ । [२] **जिज्ञासा = तत्पूर्विका तत्त्वज्ञानेच्छा** इति तत्त्वगोचराऽप्रीतिपरिहारपूर्विला तत्त्वगोचरयथावस्थितबोधविषयाभिलाषा, अद्वेषत एव तत्प्रतिपत्त्यानुगुण्यमिति हेतो । जिज्ञासाया विविदिषाऽपराभिधानाया सत्यामेव शुश्रूषादय. प्रज्ञागुणा भवन्ति, यथोक्त मूलकारैरेव **ललितविस्तारायाम्** —> सत्याश्वास्या तत्त्वगोचरा शुश्रूषा-श्रवण-ग्रहण-धारणा-विज्ञान-ऊहाऽपोह-तत्त्वाभिनिवेशा प्रज्ञागुणा <— [पृ ४७] इति । [३] **शुश्रूषा** प्राक् व्यावर्णिता [११/१ पृ २५२] । [४] **श्रवण = तत्त्वशुश्रूषानिवन्धनतत्त्ववचनाऽऽकर्णनमिति** । ततश्च सवेगादिलाभोऽपि महार्घ्य. सञ्जायते । इदमेवा-भिप्रेत्य **श्रावकप्रज्ञप्तिप्रकरणे श्रीउमास्वातिवाचकैः** —> नव-नवसवेगो खलु नाणावरणखओवसमभावो । तत्ताहिगमो य तहा जिणवयणाऽऽयन्नणस्स गुणा ॥३॥ नवि त करेइ देहो न य सयणो नेय वित्तसवाओ । जिणवयणसवणजणिया ज सवेगाइया लोए ॥४॥ <— इति । ततश्चाऽखिल कल्याण सञ्जायते, तदुक्त **योगदृष्टिसमुच्चये** —> क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगत. । बीज प्ररोहमादत्ते तद्वत्तत्त्वश्रुतेर्नर· ॥६१॥ क्षाराम्भ.तुल्य इह च भवयोगोऽखिलो मत । मधुरोदकयोगेन समा तत्त्वश्रुतिस्तथा ॥६२॥ अतस्तु नियमादेव कल्याणमखिल नृणाम् । गुरुभक्तिसुखोपेत लोकद्वयहितावहम् ॥६३॥ <— इति प्राक् दर्शितमेव [पृ २५] ।

यत्तु **योगसारप्राभृते** —> क्षाराम्भस्त्यागत क्षेत्रे मधुरोऽमृतयोगत । प्ररोहति यथा बीज ध्यान तत्त्वश्रुतेस्तथा ॥ [७/५०] इत्येव वदता नग्नाटामितगतिना तत्त्वश्रवणस्य ध्यानफलकत्वमुक्त **तच्चिन्त्यम्** । [५] **बोधः = श्रवणनिवन्धनतत्त्वपरि-च्छेदः** = तत्त्वगोचराप्रीतिपरिहारमूलकजिज्ञासासहित-शुश्रूषापूर्वकश्रवणजनित सूक्ष्म तत्त्वनिर्णय. । [६] **मीमासा = बोधानन्तर-**

જૈનપ્રવચનને અનુસારી હોય તે જ સત્ છે આ ખ્યાલમા રાખવુ ] [૧૬/૧૩]

ઉપરોક્ત અદ્વેષ જ તત્ત્વજ્ઞાનને અનુકૂળ છે - આ વાતને જણાવતા ગ્રથકારશ્રી કહે છે કે —

**ગાથાર્થ** - [૧] અદ્વેષ, [૨] જિજ્ઞાસા, [૩] શુશ્રૂષા, [૪] શ્રવણ, [૫] બોધ, [૬] મીમાસા, [૭] પરિશુદ્ધ પ્રતિપત્તિ, [૮] પ્રવૃત્તિ - આમ તત્ત્વપ્રવૃત્તિ અષ્ટાગિકી છે [૧૬/૧૪]

## ❀ તત્ત્વમાં અષ્ટાંગપ્રવૃત્તિ ❀

**ટીકાર્થ** :- [૧] કોઈક પક્ષપાતના કારણે થયેલ તત્ત્વવિષયક અપ્રીતિનો પરિહાર = અદ્વેષ [૨] અદ્વેષપૂર્વક તત્ત્વજ્ઞાનની ઈચ્છા = જિજ્ઞાસા [૩] જ્ઞાનના પ્રવાહની સેર જેવી તત્ત્વજિજ્ઞાસાપૂર્વક તત્ત્વ સાભળવાની ઈચ્છા = શુશ્રૂષા [૪] શ્રવણ = તત્ત્વને સાભળવુ [૫] બોધ = તત્ત્વજ્ઞાન [૬] મીમાસા = તત્ત્વવિચારણા મૂળ ગાથામા શ્રવણ વગેરે પદનો દ્વન્દ્વ સમાસ

[१] मुद्रितप्रतौ १ —> श्रवणमाकर्णन, बोधोऽवगम , मीमासा तत्त्वविचाररूपा <— इति त्रुटित पाठ ।

द्वन्द्व । (७) **परिशुद्धा** = सर्वतो भावविशुद्धा **प्रतिपत्ति** = मीमासोत्तरभाविनी 'इदमित्थमेवे'ति निश्चयाकारा परिच्छित्ति तत्त्वविषयैव । (८) **प्रवृत्ति** = परिशुद्धप्रतिपत्त्यनन्तरंभाविनी तत्त्वविषया क्रिया । प्रवृत्तिशब्दो द्वि आवर्त्यते । तेनायमर्थ **तत्त्वे प्रवृत्ति अष्टाङ्गिकी** = अष्टभिरद्वेषादिभिरङ्गैर्निर्वृत्ता, तेन मूलागमैकदेशाऽऽगमे द्वेषो न कार्य इति ॥१६/१४॥

एव सद्धर्मपरीक्षकादिभावान् प्रतिपाद्य तत्फलोपदेशमाह —> **'गर्भार्थमि'**त्यादि ।

**गर्भार्थं खल्वेषा भावाना यत्नतः समालोच्य । पुसा प्रवर्तितव्य कुशले न्यायः सतामेषः ॥१६/१५॥**

**गर्भार्थं** = हृदयगतार्थं, **खलु** शब्दोऽवधारणे, **एषा** = प्राक्प्रकान्ताना **भावाना यत्नत** = प्रयत्नात् **समा-**

कल्याणकन्दली

भावि-तत्त्वविचाररूपा सम्यग्ज्ञानफलत्वेन हितोदया, तदुक्त **योगदृष्टिसमुच्चये** —> मीमासाभावतो नित्य न मोहोऽस्या यतो भवेत् । अतस्तत्त्वसमावेशात् सदैव हि हितोदय. ॥१६९॥ एतद्विरहे श्रुतमपि व्यर्थ स्यात्, तदुक्त **महाभारते** —> यस्य नास्ति निजा प्रज्ञा केवल तु बहुश्रुत. । न स जानाति शास्त्रार्थ दर्वी सूपरसानिव ॥ <— [सभापर्व-५५/४] इति । यथोक्त **साङ्ख्यसूत्रे**ऽपि —> नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते, विरोचनवत् [४/१७] इति । मूलकारैरपि **लोकतत्त्वनिर्णये** —> य. श्रुत न विचारयेत् स कार्य विन्दते कथम् ? <— [२०] इत्युक्तम् । तत्त्वविचाररूपा मीमासैव तत्त्वरुचिप्रभृतिपदेनाभिलप्यते, वक्ष्यमाण-प्रतिपत्तिजनकत्वात्, यथोक्त **श्रीभद्रबाहुस्वामिभि' आवश्यकनिर्युक्तौ** —> जह जह तत्तरुई तह तह तत्तागमो होइ <— [११६३] इति । इदमेवाभिप्रेत्य **निशीथचूर्णौ** —> उवउज्जमाणस्स य णाण भवति <— [गा.२१५५ चू] इति प्रोक्तम् ।

[७] **सर्वतः** = हेतु-स्वरूप-फलापेक्षया **भावविशुद्धा मीमासोत्तरभाविनी** = तत्त्वमीमासाफलभूता **'इदमित्थमेव'** इति **निश्चयाकारा परिच्छित्तिः तत्त्वविषयैव** । तत्प्राप्तावेव तत्त्वमीमासासाफल्यम् । [८] **प्रवृत्तिः** = **परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषया** = हेयोपादेयविषयिणी हानोपादानात्मिका **क्रिया** । **आवश्यकनिर्युक्तौ** तु —> [1]सुस्सूसइ, [2]पडिपुच्छइ, [3]सुणेइ, [4]गिण्हइ, य [5]ईहए वावि । तत्तो [6]अपोहए य [7]धारेइ करेइ[8] वा सम्म ॥२२॥ <— इत्येव बुद्धेरष्टौ गुणा दर्शिता इति ध्येयम् ॥१६/१४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> एषा भावाना खलु गर्भार्थ यत्नत समालोच्य पुसा कुशले प्रवर्तितव्य एष सता न्याय. ॥१६/१५॥

**समालोच्य** एव **सदनुष्ठाने प्रवर्त्तितव्यमिति**, क्रियाया अपि ज्ञानस्याऽभ्यर्हितत्वात् । अत एव पात्रकादिचारित्रोपकरणोपरि पुस्तकादि ज्ञानोपकरण स्थाप्यते, न तु पुस्तकादिज्ञानसाधनस्योपरि पात्रकादिचारित्रोपकरणानीति ज्ञाननयवादिन' । —> ज्ञानान्मुक्ति <— [३/२३] इति साङ्ख्यसूत्रमप्येतदनुपाति । —> ज्ञानाय कृत्य परम क्रियाभ्य. [५/२५] इति **सौदनन्दकृतो**ऽश्वघोषस्य वचनमपि ज्ञानप्राधान्यकम् । क्रियानयवादिनस्तु वदन्ति **समालोच्य सदनुष्ठाने प्रवर्त्तितव्य** एव, क्रियाविरहितस्य ज्ञान-

કરવાનો છે [૭] મીમાસા પછીના કાળમા 'આ તત્ત્વ આ પ્રમાણે જ છે' આવો નિશ્ચય કે જે સર્વ પ્રકારે ભાવથી વિશુદ્ધ હોય તે પરિશુદ્ધ પ્રતિપત્તિ [૮] પ્રવૃત્તિ = તત્ત્વવિષયક જ પ્રવૃત્તિ અર્થાત્ પરિશુદ્ધ પ્રતિપત્તિ પછી થનાર તત્ત્વવિષયક ક્રિયા [ત્યાજ્યને છોડવાની અને ઉપાદેયને ગ્રહણ કરવાની ક્રિયા] મૂળ ગાથામા રહેલ પ્રવૃત્તિ શબ્દનુ બે વાર પુનરાવર્તન કરવાનુ છે તેથી અર્થ એવો થશે કે તત્ત્વવિષયક પ્રવૃત્તિ અષ્ટાગિકી છે અર્થાત્ અદ્વેષ વગેરે આઠ અગો દ્વારા તત્ત્વવિષયક પ્રવૃત્તિ થાય છે માટે મૂલાગમના એકદેશસ્વરૂપ જૈનેતર ધર્મશાસ્ત્ર ઉપર દ્વેષ ન કરવો [૧૬/૧૪]

આ રીતે સદ્ધર્મપરીક્ષક વગેરે ભાવોનુ પ્રતિપાદન કરીને તેના ફલનો ઉપદેશ આપતા ગ્રથકારશ્રી જણાવે છે કે —

<u>ગાથાર્થ</u> - આ ભાવોના ગર્ભિત અર્થને પ્રયત્નપૂર્વક સારી રીતે વિચારીને પુરુષોએ કુશલ-સદનુષ્ઠાનમા પ્રવૃત્તિ કરવી જોઈએ - આ સજ્જનોનો માર્ગ છે [૧૬/૧૫]

## ❀ ગ્રંથફલોપદેશ ❀

<u>ટીકાર્થ</u> .- પૂર્વે જણાવેલ ભાવોના હાર્દિક ગર્ભિત અર્થને પ્રયત્નથી સૂક્ષ્મ બુદ્ધિથી વિચારીને પુરુષાર્થમા પ્રવૃત્ત પુરુષે કુશલ-સદનુષ્ઠાનમા પ્રવૃત્તિ કરવી જોઈએ મૂળ ગાથામા રહેલ ખલુ શબ્દ અવધારણ = નિશ્ચય અર્થમા છે [જ્ઞાનનયથી અવધારણ આમ કરવું કે —> સૂક્ષ્મ બુદ્ધિથી વિચારીને જ સદનુષ્ઠાનમા પ્રવૃત્તિ કરવી < ...નયથી અવધારણ આ રીતે થશે કે 'સૂક્ષ્મ

**लोच्य** = [1]सूक्ष्मप्रज्ञया विचार्य **पुसा** = पुरुषार्थप्रवृत्तेन **कुशले** सदनुष्ठाने **प्रवर्त्तितव्य न्याय** = अविचलित-मार्ग **सता** = सत्पुरुषाणा **एष** वर्तते, नान्य ॥१६/१५॥

अथैते भावा कुतोऽभिहिता किमर्थं वा ? इत्याह —> 'एत'इत्यादि ।

**एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भवविरहसिद्धिफलाः ॥१६/१६॥**

**एते** = प्रस्तुता **भावा प्रवचनत** = द्वादशाङ्गात् **खलुशब्दो** वाक्यालङ्कारे **समुद्धृता** = एकवाक्यतया पृथक् स्थापिता, मन्दमतीना = विस्तृतावगाहनाऽक्षमधिया हितार्थं **तु** = हितायैव **च** = पुन आत्मनोऽनुस्मरणाय, कीदृशा भावा ? आदित आरभ्य भवविरह = मोक्ष तस्य सिद्धि = निष्पत्ति फल येषा ते तथा ॥१६/१६॥

## कल्याणकन्दली

स्याऽकिञ्चित्करत्वात् । इदमेवाभिप्रेत्य **उपदेशमालाया** —> जहा खरो चदणभारवाही, भारस्स भागी न हु चदणस्स । एव खु नाणी चरणेण हीणो नाणस्स भागी न हु सुग्गईए ॥४२६॥ <— इत्युक्तम् । **भद्रबाहुस्वामिभिरपि आवश्यकनिर्युक्तौ** —> न नाणमित्तेण कज्जनिप्फत्ती <— [१५१] इत्युक्तम् । **द्वात्रिंशिकाप्रकरणे श्रीसिद्धसेनदिवाकरेणा**ऽपि —> यथा गदपरिज्ञान नालमामयशान्तये । अचारित्र तथा ज्ञान न बुद्ध्यध्यवसायमात्रेण ॥ <— [१७/२७] इत्युक्तम् । **महोपनिषदि** अपि —> परम पौरुष यत्नमास्थायाऽऽदाय सूद्यमम् । यथाशास्त्रमनुद्वेगमाचरन् को न सिद्धिभाक् ॥ <— [५/८८] इत्युक्तम् । **भगवद्गीता**यामपि —> स्वे स्वे कर्मण्यभिरत ससिद्धि लभते नर <— [१८/४५] इति क्रियायोगस्योपादेयताऽऽविष्कृता । **मनुस्मृताव**पि —> आचार परमो धर्म <— [१/१०८] इत्युक्तम् । तदुक्त **चाणक्यसूत्रे**ऽपि —> नाऽऽचरितात् शास्त्र गरीय <— [४७१] इति । **महाभारते**ऽपि —> आचारप्रभवो धर्म <— [अनु पर्व १०४-१५५] इत्युक्तम् ।

अत्र स्थितपक्षस्तु ज्ञान-क्रियोभयसमुच्चयकारी । तदुक्त **विशेषावश्यकमहाभाष्ये** हय नाण किरियाहीण, हया अन्नाणओ किरिया । पासतो पगुलो दड्ढो, धावमाणो अ अधओ ॥११५९॥ सजोगसिद्धी अ फल वयति, न हु एगचक्केण रहो पयाई । अधो य पगू य वणए समिच्चा ते सपणट्ठा नगर पविट्ठा ॥ <— [११६५] इति । **मरणसमाधिप्रकीर्णके**ऽपि —> नाणेण विणा करण न होइ, णाण पि करणहीण तु । नाणेण य करणेण य दोहि वि दुक्खक्खय होइ ॥ <— [१४७] इत्युक्तम् । तदुक्त **योगवाशिष्ठे**ऽपि —> उभाभ्यामेव पक्षाभ्या यथा खे पक्षिणा गति । तथैव ज्ञान-कर्मभ्या जायते परम पदम् ॥१/७॥ केवलात् कर्मणो ज्ञानान्न हि मोक्षोऽभिजायते । किन्तूभाभ्या भवेन्मोक्ष साधन तूभय विदु ॥१/८॥ <— इति । **योगशिखोपनिषदि** अपि —> योगहीन कथ ज्ञान मोक्षद भवतीह भो । योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्ष-कर्मणि ॥ [१/१३] <— इत्युक्तम् । **ईशोपनिषदि** —> विद्या चाविद्या च यस्तद्वेदोभय सह । अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते ॥[११] <— इत्येव ज्ञानकर्मणो साहित्यमुक्तम् । **मुण्डकोपनिषदि** अपि —> आत्मक्रीड आत्मरति क्रियावानेष ब्रह्मविदा वरिष्ठ <— [३/४] ज्ञानक्रिया-साहित्य श्रूयते । तदुक्त **कूर्मपुराणे**ऽपि —> कर्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते । ज्ञानञ्च कर्मसहित जायते दोष-वर्जितम् ॥ <— [३/२३] इति । **विष्णुपुराणे**ऽपि —> तस्मात्तत्प्राप्तये यत्न कर्तव्य पण्डितैर्नरै । तत्प्राप्तिहेतुर्विज्ञान कर्म चोक्त महामते ! ॥ <— [ ] इत्येव ज्ञान-क्रियासमुच्चय उक्त इति भावनीय तत्त्वमेतद् गीतार्थगुरुसमीपे ॥१६/१५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> भवविरहसिद्धिफला खलु एते मन्दमतिहितार्थं तु आत्मानुस्मरणाय च प्रवचनत समुद्धृता ॥१६/१६॥ योगदीपिका स्पष्टैव ॥१६/१६॥

બુદ્ધિથી વિચારીને સદનુષ્ઠાનમાં પ્રવૃત્તિ કરવી જ જોઈએ '] સજ્જન પુરુષોનો આ જ અવિચલિત માર્ગ છે, બીજો નહિ [અર્થાત્ જાણ્યા વિના પ્રવૃત્તિ ન કરવી અને જાણ્યા પછી સારી પ્રવૃત્તિ કરવી જ] [૧૬/૧૫]

આ ભાવો ક્યાંથી કહ્યા ? અથવા શા માટે કહ્યા ? આનો જવાબ દેતા ગ્રંથકારશ્રી કહે છે કે —

**ગાથાર્થ** :- મોક્ષસિદ્ધિરૂપી ફળને આપનારા આ ભાવો મંદબુદ્ધિવાળા જીવોના હિત માટે અને પોતાના સ્મરણ માટે દ્વાદશાંગીમાંથી સમુદ્ધાર કરેલા છે [૧૬/૧૬]

## ગ્રંથરચના પ્રયોજન

**ટીકાર્થ** - વિસ્તૃત અર્થના અવગાહન માટે અસમર્થ એવા મંદબુદ્ધિવાળા જીવોના હિત માટે જ અને પોતાના સ્મરણ માટે આ પ્રસ્તુત ભાવો દ્વાદશાંગીસ્વરૂપ જિનપ્રવચનમાંથી એકવાક્યસ્વરૂપે [= એકપ્રકરણસ્વરૂપે = પરસ્પરઅર્થસંબદ્ધવાક્યસમૂહસ્વરૂપે] અલગ સ્થાપેલા છે પહેલેથી માંડીને ભવવિરહની = મોક્ષની નિષ્પત્તિ સ્વરૂપ ફળને આ ભાવો આપે છે [૧૬/૧૬]

[1] ह प्रता —> 'सूक्ष्मेक्षया <— इति पाठ । सोऽपि शुद्ध ।

अथ ग्रन्थकृद्गर्भार्थपरिज्ञानाय बहुश्रुतभक्तिमुपदिशन्नाह --> 'धर्मे'त्यादि ।

**धर्मश्रवणे यत्नः सततं कार्यो बहुश्रुतसमीपे । हितकाङ्क्षिभिर्नृसिंहैर्वचनं ननु हारिभद्रमिदम् ॥१६/१७॥**

धर्मस्य = श्रुतचारित्ररूपस्य श्रवणे **यत्न** = आदर **सततं** = अनवरत **कार्यो बहुश्रुतसमीपे हितकाङ्क्षिभि** = हितार्थिभि **नृसिंहै** = पुरुषोत्तमै **वचनं** प्रार्थनारूप **ननु** इति वितर्के **हारिभद्र** = हरिभद्रसम्बन्धि **इद**, यद्वा **ननु** = निश्चित हारि = मनोज्ञ **भद्र इद** वचो यद् 'बहुश्रुतेभ्य एव धर्म श्रोतव्य' इति, अबहुश्रुतेभ्यो धर्मश्रवणे प्रत्यपायसम्भवात् । शिष्यकर्तृकेयमार्येत्यन्ये ॥१६/१७॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> हितकाङ्क्षिभिः नृसिंहैः बहुश्रुतसमीपे धर्मश्रवणे सतत यत्नः कार्य <-- ननु इद हारिभद्र वचनम् ॥१६/१७॥

**बहुश्रुतसमीपे** इति । 'विचित्त बहुय च सुय बहुस्सुतो' <-- [भाग ३ उद्दे १० पृ ३] इति **निशीथचूर्णि**दर्शितबहुश्रुतसन्निधौ, अन्यथा सूत्रार्थस्य सूक्ष्मधीगम्यतया बहुश्रुतेनाऽव्याख्याने तदनवबोधात् । तदुक्त **निशीथभाष्ये** --> निउणो खलु सुत्तत्थो, न हु सक्को अपडिबोहितो नाउ <-- [५२५२/५३७५] इति । **पञ्चवस्तुके**ऽपि --> सम्म विआरिअव्व अत्थपद भावणापहाणेण । विसए अ ठावियव्व सुबहुस्सुअगुरुसयासाओ ॥८६५॥ <-- इत्युक्तम् । इदमेवाभिसन्धाय **श्राद्धदिनकृत्ये देवेन्द्रसूरिभिः** --> सम्म विआरियव्व अत्थपय भावणापहाणेहि । विसए य ठावियव्व बहुसुयगुरुणो सगासाओ ॥९४॥ <-- इत्युक्तम् । बहु = प्रभूत अङ्गोपाङ्गच्छेदग्रन्थादिभेदभिन्न स्वसमय-परसमयवक्तव्यतानुगत 'स्यादस्ति स्यान्नास्ती'त्यादिसप्तभङ्गिकनैपुण्योपेत नैगमसप्तमूलनय-निश्चयव्यवहार-द्रव्यास्तिकपर्यायास्तिक-ज्ञानचरणनयाद्यनेकविचारचातुर्ययुक्तमनेकान्तवादात्मक सूत्रार्थोभयरूप श्रुत = अर्हत्प्रवचन यस्य स बहुश्रुत. इति **तद्वृत्तौ** । एतादृशबहुश्रुतादध्येतव्यम् । उपलक्षणात् सविग्नत्वादिगुणग्रहण कार्यम्, तादृशस्यैव ज्ञानदानाधिकारित्वात्, तदुक्त **पुष्पमालाया** --> सविग्गो गीयत्थो मज्झत्थो देस-कालभावन्नू । नाणस्स होइ दाया जो सुद्धपरूवगो साहू ॥२०॥ <-- इति । तादृशो ज्ञानदाता सुतीर्थकल्प. । तत्समीप एवोत्सर्गतोऽध्येतव्यम् । तदुक्त **मुनिचन्द्रसूरिभिः** उपदेशामृतप्रकरणे --> नाण च पुण सुतित्थे विहिणा सिद्धतसारसवणेण <-- [१९] इति । --> जेण आयारपगप्पो ण ज्ञातितो एस अबहुस्सुतो <-- [नि भा ५४४८ भाग-४-पृ ७३] इति **निशीथचूर्णि**-प्रदर्शितेभ्य. अबहुश्रुतेभ्यः यद्वाऽदृष्टनयप्रमाणरूपराद्धान्तपरमार्थलक्षणेभ्योऽबहुश्रुतेभ्य. **धर्मश्रवणे प्रत्यपायसम्भवात्** = बलवद्दोषसम्भवात् । ततश्चाय ग्रन्थ. सटीकः सोपटीको गुणग्रहणरसिकेभ्यो बहुश्रुतेभ्य एवाध्येय इति शम् ।

❀ कल्याणकन्दलीकृत्प्रशस्तिः ❀

आत्म-कमल-वीरप्रभृतिपट्टाम्बरे वरा । दानसूरिवराः जाता भास्करसमकान्तय ॥१॥

હવે ગ્રંથકારના ગર્ભિત અર્થનો ચારે બાજુથી બોધ થાય તે માટે બહુશ્રુત પુરુષોની ભક્તિનો ઉપદેશ આપતા શ્રીમદ્જી કહે છે કે —

**ગાથાર્થ** :- હિતકાંક્ષી ઉત્તમ પુરુષોએ બહુશ્રુત વ્યક્તિ પાસે ધર્મ સાંભળવાનો પ્રયત્ન સતત કરવો-આ હરિભદ્રસૂરિજી મહારાજનુ વચન છે [૧૬/૧૭]

### ❀ બહુશ્રુત પાસે જ ધર્મશ્રવણ કરવું -- શ્રી હરિભદ્રસૂરિજી મહારાજ ❀

**ટીકાર્થ** .- હિતની ઈચ્છા કરનારા ઉત્તમ પુરુષોએ બહુશ્રુત વ્યક્તિની પાસે શ્રુતધર્મ અને ચારિત્રધર્મને સાભળવામા સતત આદર-પ્રયત્ન કરવો આ પ્રાર્થનાસ્વરૂપ વચન હરિભદ્રસૂરિજી મહારાજનુ છે ननु શબ્દ વિતર્ક - વિચાર અર્થમા છે અથવા ખરેખર આ વચન મનોજ્ઞ-મનોહર કલ્યાણકારી છે કે - બહુશ્રુત વિદ્વાનો પાસેથી જ ધર્મ સાભળવો કેમ કે અબહુશ્રુત પુરુષો પાસેથી ધર્મશ્રવણ કરવામા નુકશાનનો સભવ છે કોઈક કહે છે કે આ છેલ્લી ગાથા શિષ્યોએ બનાવેલ છે [૧૬/૧૭]

**વિશેષાર્થ** .- શાસ્ત્રનુ તાત્ત્વિક અર્થઘટન - રહસ્યોદ્ઘાટન, ઐદંપર્યાર્થનિરૂપણ ખરેખર બહુશ્રુત વિદ્વાન જ કરી શકે, કારણ કે વર્તમાન કાળમા વિદ્યમાન સર્વ શાસ્ત્રગ્રંથોનો ઊંડો અભ્યાસ બહુશ્રુત વિદ્વાનોએ કરેલ હોય છે શાસ્ત્રનુ કેવળ વિહગાવલોકન નહિ પણ નય, નિક્ષેપ, પ્રમાણ, ઉત્સર્ગ-અપવાદ વગેરેથી ઊંડુ અવગાહન કરનાર બહુશ્રુત પુરુષો સિવાય શાસ્ત્રના તાત્ત્વિક અર્થને કોણ ઉઘાડી શકે ? પોપટ પાઠ કરનાર પોથી પડિત કે અધકચરુ ભણેલ, શુકના ગાગડે ગાધી બનેલ એવા અબહુશ્રુત વિદ્વાન પાસે શાસ્ત્ર ભણવાથી કેવળ શબ્દાર્થનો બોધ થાય, ઘણી વાર અર્થનો અનર્થ થવાથી નુકશાન થવાનો સભવ રહે છે બહુશ્રુત વિદ્વાન પાસે ભણવાથી જ શ્રીહરિભદ્રસૂરિ મહારાજ, મહોપાધ્યાય શ્રીયશોવિજયજી મહારાજ વગેરેના ગ્રંથોના હાર્દ પામી શકાય. [૧૬/૧૭]

इति 'महोपाध्यायश्रीकल्याणविजयगणिशिष्य-मुख्यपण्डितश्रीलाभविजयगणिशिष्यपण्डित-श्रीजीतविजयगणि-सतीर्थपण्डित-श्रीनयविजयगणिचरणकमलचञ्चरीक- श्रीपद्मविजयगणिसहोदरोपाध्याय-श्रीयशोविजयगणिविरचिता योगदीपिकानाम्नी षोडशकवृत्तिः सम्पूर्णा ॥

एषा षोडशकव्याख्या संक्षिप्तार्थावगाहिनी । सिद्धाऽक्षततृतीयाया भूयादक्षयसिद्धये ॥१॥

## कल्याणकन्दली

तत्पट्टगगने जाता मृगाङ्कसमकान्तयः । प्रेमसूरीश्वराः शिष्यादिलब्धिभिस्समन्विताः ॥२॥

तत्पट्टाकाशविद्योतका भानुसमकान्तयः । भुवनभानुसूरीशा एकान्तवादनाशकाः ॥३॥

यैरिष्टफलसिद्ध्यादयः सिद्धान्ताः सुरक्षिताः । साम्प्रतं कलिकालेऽपि सङ्घैक्याय कृतश्रमाः ॥४॥

न्यायविशारदैर्यैर्हृष्टोत्तरशतोलिका । वर्धमानाभिधानस्य तपसोऽपि कृता मुदा ॥५॥

राजन्ते साम्प्रतं धन्या तत्पट्टगगनाङ्गणे । श्रीजयघोषसूरीशा निशेशसमकान्तयः ॥६॥

सकलसङ्घमध्ये हि सूरिपदार्पणक्षणे । स्वगुरुदत्तसिद्धान्तदिवाकरपदान् स्तुवे ॥७॥

प्रमादपरिकल्पितं यदि किञ्चिदालोचितं तदस्ति खलु दूषणं मम हि नैव चान्यस्य तत् ।
यदत्र नवकल्पनाकलिततर्कवाग्वैभवं तदेव जयसुन्दरस्फुरन्मोघशिशाफलम् ॥८॥

पञ्चविंशतिभिः सार्धं प्रव्रजितः स मे गुरुः । विजयो विश्वकल्याणः पुण्यशाली प्रभावकः ॥९॥

प्रसन्नास्याय सौम्याय चैत्योद्धारोद्यताय हि । भुवनभानुसूरीशशिष्याय गुरवे नमः ॥१०॥

अनेकशास्त्रसंवादं तत्र तत्र प्रदर्श्य हि । स्वपरदर्शनानां च समन्वयं प्रसाध्य वै ॥११॥

अङ्कुष्ठाक्षाग्रराशिप्रमिते [२०५१] विक्रमवत्सरे । शिरुरनगरे ज्ञानपञ्चम्यां हि कृतिः कृता ॥१२॥ युग्मम् ।

कृतिरियं सदा नन्द्याच्छ्रीयशोविजयस्य हि । अनया लभतां लोको मिथ्यात्वविजयश्रियम् ॥१३॥

इति षोडशकोपरि योगदीपिकोपरि च मुनियशोविजयकृता कल्याणकन्दलीटीका ।

આ પ્રમાણે મહોપાધ્યાય શ્રી કલ્યાણવિજય ગણિવરના શિષ્ય મુખ્ય પંડિત શ્રીલાભવિજય ગણિવરના શિષ્ય પંડિત જીતવિજય ગણિવરના ગુરુભાઈ પંડિત શ્રી નયવિજય ગણીના ચરણકમલમાં ભ્રમરતુલ્ય તેમ જ પંડિત પદ્મવિજય ગણિવરના સહોદર [ભાઈ] ઉપાધ્યાયશ્રી યશોવિજય ગણી દ્વારા રચાયેલી યોગદીપિકા નામની ષોડશકટીકા સંપૂર્ણ થઈ.

સંક્ષિપ્ત અર્થનું અવગાહન કરનારી ષોડશકની આ વ્યાખ્યા અક્ષય તૃતીયાના દિવસે પૂર્ણ થઈ તે અક્ષય સિદ્ધિને માટે થાવ [૧]

સ્વ. વર્ધમાનતપોનિધિ ન્યાયવિશારદ આચાર્યશ્રી ભુવનભાનુસૂરીશ્વરજીના શિષ્યરત્ન મુનિરાજશ્રી વિશ્વકલ્યાણવિજયજીના શિષ્ય મુનિ યશોવિજયે ષોડશક અને તેની યોગદીપિકા ટીકાનો ગુર્જર ભાષામાં કરેલો ભાવાનુવાદ સાનંદ સંપૂર્ણ થાય છે.

કાર્તિક સુદ-૫,
વિ.સં. ૨૦૫૧,
શિરુર

कल्याणं भवतु श्रीसङ्घस्य

शिवमस्तु सर्वजगतः

१ ह प्रतौ —> उपाध्यायश्रीयशोविजयगणि <— इत्यादि पाठः ।

## ૧૬ મા ષોડશકનો સ્વાધ્યાય

**(અ) નીચેના કોઈ પણ સાત પ્રશ્નના જવાબ વિસ્તારથી લખો.**

૧ કથચિત્ નિર્ગુણમુક્તિ સમજાવો
૨ બુઝાયેલ દીપક જેવી મુક્તિ કેમ અસગત છે ?
૩ આત્માને પરિણામી માનવો શા માટે જરૂરી ?
૪ અવિદ્યાનુ વાસ્તવિક સ્વરૂપ જણાવો
૫ તથાભવ્યત્વનો સ્વીકાર શુ આવશ્યક છે ? શા માટે ?
૬ પુરુષાદ્વૈતના સ્વીકારમા શુ દોષ છે ?
૭ જૈનેતર શાસ્ત્રો ઉપર દ્વેષ શા માટે ન કરવો ?
૮ અદ્વૈતવાદમા કલ્પના શા માટે અસભવિત છે ?
૯ પરિશુદ્ધ આગમનો પરિચય આપો
૧૦ અષ્ટાગિકી તત્ત્વપ્રવૃત્તિ સમજાવો

**(બ) યોગ્ય જોડાણ કરો**

| | |
|---|---|
| (૧) તથતા | (A) માર્ગ |
| (૨) પશુત્વવિગમ | (B) ખરાબ પ્રવૃત્તિનુ કારણ |
| (૩) ન્યાય | (C) નિશ્ચય |
| (૪) પ્રતિપત્તિ | (D) દ્વાદશાગી |
| (૫) ભવવિગમ | (E) તથાભવ્યત્વપ્રયુક્ત |
| (૬) રાગાદિ | (F) પરતત્ત્વ |
| (૭) તીર્થકરસિદ્ધત્વ | (G) પરિતાપકારક |
| (૮) અગ્નિ | (H) મોક્ષ |
| (૯) પ્રવચન | (I) અજ્ઞાનનાશ |
| (૧૦) અદ્વૈતવાદ | (J) અપ્રામાણિક |

**(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો**

૧ સમરસાપત્તિને ______ લોકો પરમાનદ કહે છે (વેદાતી, બૌદ્ધ, જૈન)
૨ ______ પછી શુશ્રૂષા આવે (અદ્વેષ, જિજ્ઞાસા, બોધ)
૩ સદ્ભૂત એવા જૈનેતર શાસ્ત્રની અરુચિ દ્વાદશાગીની આશાતનામા પરિણમે છે એ વાત ______ મા આવે છે (યોગશતક, ઉપદેશપદ, સ્યાદ્વાદકલ્પલતા)
૪ અદ્વૈતવાદ સ્વીકારમા ______ પ્રમાણ બાધક છે (પ્રત્યક્ષ, અનુમાન, આગમ)
૫ નીલઘટત્વ એ ______ છે (અર્થસમાજસિદ્ધ, અન્યથાસિદ્ધ, વિશિષ્ટધર્મ)
૬ ભવ્યત્વ એ ______ સ્વરૂપ છે (સહજમલ, યોગ્યતા, મોક્ષકારણતા)
૭ અવિદ્યા ______ સ્વરૂપ છે (કલ્પના, સત્, જીવ)
૮ બુઝાયેલ દીવા જેવી મુક્તિ ______ લોકો માને છે (વેદાતી, બૌદ્ધ, નૈયાયિક)
૯ પરમાત્મશબ્દથી વાચ્ય ______ છે (તીર્થકર, સિદ્ધ, પરમેષ્ઠી)
૧૦ અન્યોન્યમુક્તિસાકર્ય દોષ ______ મતમા આવે (વેદાતી, નૈયાયિક, બૌદ્ધ)

નોધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો

## કલ્યાણકંદલીની અનુપ્રેક્ષા

**(અ) નીચેના પ્રશ્નોના વિસ્તારથી જવાબ આપો**

૧ આત્માને એકાંત નિત્ય કે સર્વથા ક્ષણિક કેમ ન માની શકાય ?
૨ અર્થસમાજનિ દ્ર એટલે શું ? તીર્થંકરનિ દત્વ તનુ છે ? ના માટે ?
૩ ભવ્યત્વ અને તથાભવ્યત્વમાં ભેદ શું છે ?
૪ યોગબિંદુ ગ્રંથ મુજબ પુરુષાદ્વૈતનું નિરાકરણ કરો
૫ અનેક દર્શન મુજબ કર્મનો સ્વીકાર સમજાવો
૬ ઈતર દર્શનશાસ્ત્રોના સદ્વચનના અપલાપમાં શું નુકસાન ?
૭ જ્ઞાન-ક્રિયાનો સ્થિતપક્ષ સમજાવો
૮ અબહુશ્રુત પાસે શા માટે ન ભણવું ?
૯ કોની પાસે વ્યાખ્યાન કરવો ? તેના પાંચ વિશેષણ સમજાવો
૧૦ કોણ શ્રેષ્ઠ બ્રહ્મવત્તા છે ? સમજાવો

**(બ) નીચેના પ્રશ્નોના સંક્ષેપમાં જવાબ આપો**

૧ જન્માદિવિરહ પરમાનંદનો લાભ કેવી રીતે બને ?
૨ મોક્ષમાં પ્રાકૃત ધર્મ ન હોય - એટલે શું ?
૩ ભાગવત મુજબ મુક્તિ એટલે શું ?
૪ આત્મશૂન્ય શુદ્ધજ્ઞાનક્ષણોને મોક્ષ માનવામાં કઈ વિપદા આવી પડે ?
૫ પરિણામની વ્યાખ્યા શું છે ?
૬ કર્મના પર્યાયવાચી શબ્દો જણાવો
૭ સહજ મલ એટલે શું ?
૮ ભવ્યત્વની ત્રણ વ્યાખ્યા સમજાવો
૯ અવિદ્યાને કાલ્પનિક માનવામાં શું દોષ છે ?
૧૦ 'વિકલ્પ'ની વ્યાખ્યા બતાવો
૧૧ ગૌતમ બુદ્ધને પગમાં કાંટો શા માટે લાગ્યો ?
૧૨ વિદ્વાનો કેવા સિદ્ધાન્તને સ્વીકારે ?
૧૩ લલિતવિસ્તરા મુજબ પ્રજ્ઞાના આઠ ગુણો જણાવો
૧૪ આવશ્યકનિર્યુક્તિ મુજબ બુદ્ધિના આઠ ગુણો દર્શાવો
૧૫ તત્ત્વશ્રવણનો લાભ શું ?
૧૬ મીમાંસા એટલે શું ? તેનું ફળ શું છે ?
૧૭ જ્ઞાન કરતા આચાર કઈ રીતે ચઢિયાતો છે ?
૧૮ આચાર કરતા જ્ઞાન કઈ દૃષ્ટિએ બળવાન છે ?
૧૯ બહુશ્રુતની વિભિન્ન વ્યાખ્યા દર્શાવો
૨૦ છેલ્લા ષોડશકની છેલ્લી ગાથાના કર્તા વિષે શું મતભેદ છે ?

**(ક) ખાલી જગ્યા પૂરો**

૧ ક્ષેત્રજ્ઞ = (શરીરી, પરમાત્મા, ખેડૂત)
૨ પોતાનું કર્મ ની જેમ સાથે હોય છે (શ્વાન, પડછાયા, જ્ઞાન)
૩ મીમાંસાનું બીજું નામ છે (તત્ત્વરુચિ, તત્ત્વશ્રવણ, તત્ત્વનિશ્ચય)
૪ આચારહીન જ્ઞાની સમાન છે (ભારવાહક ગધેડા, આળસુ, નાસ્તિક)
૫ જ્ઞાન અને ક્રિયા એ બે તુલ્ય છે (પાંખ, આંખ, દંપતી)
૬ જિજ્ઞાસાનું ફળ છે (જ્ઞાન, શ્રવણ, શુશ્રૂષા)

परिशिष्ट -१

# षोडशक-मूलगाथा-सूचिपत्र

# परिशिष्ट - २
## मूलग्रन्थे स्पष्टीकृता अर्थविशेषाः



# परिशिष्ट - ३
## योगदीपिकायां वाक्यविशेषानां निर्देशः

# परिशिष्ट - ४
# कल्याणकन्दल्यां साक्षितया दर्शितानां ग्रन्थानां सूचिः

पृष्ठ



पृष्ठ

# परिशिष्ट - ५
# कल्याणकन्दल्यां निर्दिष्टा नामविशेषाः

# परिशिष्ट - ६
# कल्याणकन्दल्यां दर्शितानां साक्षिपाठानां सूचिः

# परिशिष्ट - ७
## योगदीपिकायां कल्याणकन्दल्यां च स्पष्टीकृताः पदार्थविशेषाः

## પરિશિષ્ટ - ૮ ષોડશક સ્વાધ્યાયનુ ઉત્તરપત્ર

**ષોડશક - ૧** [B] ૧-A, ૨-D, 3-F, ૪-C, ૫-J, ૬-H, ૭-I, ૮-B, ૯-E, ૧0-G

[C] (૧) મિથ્યાચાર, (૨) કાર્ય, કારણ, (૩) પંડિત, (૪) શ્રોતા, (૫) કુશીલતા, (૬) આગમ, (૭) સાધ્ય, (૮) સ્નિગ્ધપદાર્થ, (૯) બોધિ, (૧૦) અતિપરિણામી

**ષોડશક - ૨** [B] ૧-F, ૨-G, 3-B, ૪-E, ૫-A, ૬-J, ૭-I, ૮-C, ૯-D, ૧0-H

[C] (૧) પાપદેશના, (૨) સર્વજ્ઞદર્શન, (૩) આગમ, (૪) સાધુ, (૫) જિનવચન આરાધના, (૬) સર્વજ્ઞ, (૭) તાત્સ્થ્ય, તદજનતા, (૮) મધ્યમ, (૯) ભગવાન, (૧૦) શાસ્ત્ર

**ષોડશક - 3** [B] ૧-J, ૨-I, 3-H, ૪-E, ૫-G, ૬-૮, ૭-A, ૮-B, ૯-D, ૧0-F

[C] (૧) વિમુક્તિરસ, (૨) સિદ્ધિ, (૩) ૩, (૪) મન, (૫) કાર્ય-કારણ, (૬) પરિણામ, (૭) ચેષ્ટા, (૮) ઔત્સુક્ય, (૯) સમકિત, (૧૦) શુદ્ધિ-પુષ્ટિ

**ષોડશક - ૪** [B] ૧-I, ૨-J, 3-A, ૪-G, ૫-F, ૭-C, ૮-B, ૯-D, ૧0-H

[C] (૧) ૫, ૪, (૨) નિર્ભયતા, (૩) પાપોદ્વેગ, (૪) શુશ્રૂષા, (૫) પરિણામ, (૬) ખજવાળ, (૭) ભૂત, (૮) દાક્ષિણ્ય, (૯) વિષયતૃષ્ણા, (૧૦) પ્રાથમિક

**ષોડશક - ૫** [B] ૧-E, ૨-F, 3-A, ૪-G, ૫-B, ૬-C, ૭-D, ૮-J, ૯-H, ૧0-I

[C] (૧) અધ્યારોપ, (૨) ગુરૂપારતન્ત્ર્ય, (૩) ઘટતો, (૪) સર્વ, (૫) આત્મપરિણતિવાળુ, (૬) પોષ્યવર્ગ, (૭) અવિધિસેવન, (૮) સજ્ઞા, (૯) વિવેક, (૧૦) નિર્વિઘ્નતા

**ષોડશક - ૬** [B] ૧-F, ૨-A, 3-G, ૪-E, ૫-D, ૬-B, ૭-C, ૮-J, ૯-H, ૧0-I

[C] (૧) સમીપવર્તી લોકો, (૨) અયોગ્ય, (૩) અનધિકારી, (૪) વ્યાખ્યાન, (૫) શુભ અધ્યવસાય (૬) ૩, (૭) દેવ, (૮) નથી, (૯) અન્યથાસિદ્ધ, (૧૦) જયણા

**ષોડશક - ૭** [B] ૧-I, ૨-G, 3-F, ૪-J, ૫-H, ૬-C, ૭-B, ૮-E, ૯-A, ૧0-D

[C] (૧) આનુષગિક, (૨) તુરત, (૩) ચિત્તક્લેશ, (૪) **નમઃ** (૫) પરમાત્મા, શિલ્પી, (૬) વિપરિણત, (૭) વૈભવ, ૯૮) કારણ, (૯) ઉપભોગ, (૧૦) ભાવવિશુદ્ધિ

**ષોડશક - ૮** [B] ૧-G, ૨-D, 3-A, ૪-F, ૫-B, ૬-C, ૭-E, ૮-H, ૯-I, ૧0-J

[C] (૧) જિનપ્રતિમાનિમાર્ણ, ૧૦, (૨) ૩, (૩) અર્થાનુસારી (૪) ગૌણ, (૫) માતા-પિતા, (૬) ૩, (૭) વીતરાગ, (૮) ૨૧, (૯) મત્ર, (૧૦) મમત્વ

**ષોડશક - ૯** [B] ૧-E, ૨-H, 3-A, ૪-I, ૫-C, ૬-D, ૭-F, ૮-G, ૯-B, ૧0-J

[C] (૧) ૧૧, (૨) દેશ, (૩) સવેગ, (૪) સર્વસિદ્ધિફલા, (૫) ૧૧, (૬) કાયયોગ, (૭) પુણ્ય, (૮) સદનુષ્ઠાન, (૯) પરમ શ્રાવક, (૧૦) વચનયોગપ્રધાન

**ષોડશક - ૧૦** [B] ૧-F, ૨-E, 3-A, ૪-B, ૫-G, ૬-H, ૭-I, ૮-D, ૯-C, ૧0-J

[C] (૧) વચન, (૨) ધર્મ, (૩) ભાવના, (૪) વિષયતૃષ્ણા, (૫) પ્રથમ, (૬) વચન, (૭) થોડા, (૮) ચિતાજ્ઞાનઘટક, (૯) રત્નત્રય, (૧૦) ભક્તિ

**ષોડશક - ૧૧** [B] ૧-G, ૨-A, 3-H, ૪-I, ૫-D, ૬-E, ૭-C, ૮-F, ૯-B, ૧0-J

[C] (૧) ૨, (૨) ૨, (૩) અહિતકારી, (૪) અન્વયમુખી, (૫) ગાઢ કદાગ્રહ, (૬) અપૂર્વકરણ, (૭) મતિવિભ્રમ, (૮) ભાવના, (૯) ચિતા, (૧૦) જ્ઞાન

**ષોડશક - ૧૨** [B] ૧-D, ૨-G, 3-I, ૪-B, ૫-C, ૬-A, ૭-E, ૮-F, ૯-H, ૧0-J

[C] (૧) ૨, (૨) વિષાપહારિણી, (૩) ૧૮, (૪) ૨, (૫) સયમ, (૬) સવેગ, (૭) ૪, (૮) ૪, (૯) દોષની મદતા, (૧૦) કાર્ય

ષોડશક - ૧૩ [B] ૧-F, ૨-G, ૩-A, ૪-H, ૫-I, ૬-B, ૭-C, ૮-D, ૯-E, ૧૦-J
[C] (૧) ૫, (૨) મોહયુક્ત, (૩) ઈતર, (૪) સુખમાત્ર, (૫) કરૂણા, (૬) પરોપકારી, (૭) અલૌલ્ય, (૮) ગોત્ર, (૯) જ્ઞાન, (૧૦) ન હોય

ષોડશક - ૧૪ [B] ૧-H, ૨-G, ૩-E, ૪-C, ૫-B, ૬-I, ૭-A, ૮-D, ૯-F, ૧૦-J
[C] (૧) ૨, (૨) ૮, (૩) અન્યમુદ્, (૪) સિદ્ધ, (૫) ગૌતમસ્વામી, (૬) ખેદ, (૭) ઉત્થાન, (૮) ઉદ્વેગ, (૯) સાલંબન, (૧૦) ૭

ષોડશક - ૧૫ [B] ૧-A, ૨-B, ૩-F, ૪-G, ૫-I, ૬-H, ૭-E, ૮-D, ૯-C, ૧૦-J
[C] (૧) ૨૧, (૨) ૨૩, (૩) ૪, (૪) અપર, પર, (૫) ૭, (૬) ૨, (૭) પાપ, (૮) અપ્રતિષ્ઠિત, (૯) અપર, (૧૦) મતિ

ષોડશક-૧૬ [B] ૧-F, ૨-I, ૩-A, ૪-C, ૫-H, ૬-B, ૭-E, ૮-G, ૯-D, ૧૦-J
[C] (૧) વેદાંતી, (૨) જિજ્ઞાસા, (૩) ઉપદેશપદ, (૪) પ્રત્યક્ષ, (૫) અર્થસમાજસિદ્ધ, (૬) સહજમલ, (૭) સત્, (૮) બૌદ્ધ, (૯) સિદ્ધ, (૧૦) બૌદ્ધ

## પરિશિષ્ટ-૯ કલ્યાણકદલિની અનુપ્રેક્ષાનું ઉત્તરપત્ર

ષોડશક-૧ -C - (૧-નાસ્તિક), (૨-અધ્યાહાર), (૩-અપરિણત), (૪-તૃતીય), (૫-સાધુનિંદા), (૬-મધ્યમ)
ષોડશક-૨ -C - (૧-નિશ્ચય), (૨-બાલ), (૩-૧૨), (૪-ચારિત્ર), (૫-સમિતિ-ગુપ્તિ), (૬-હૃદયસ્થ)
ષોડશક-૩ -C - (૧-ચિત્તવિચાર), (૨-અંધ-પંગુ), (૩-અન્યમુદ્), (૪-સ્થૈર્ય), (૫-નોઆગમ), (૬-સમકિતી)
ષોડશક-૪ -C - (૧-ધૈર્ય), (૨-ગંભીર), (૩-કામધેનુ), (૪-અપ્રમાદ), (૫-ધ્યાન), (૬-મંડલતંત્રવાદી)
ષોડશક-૫ -C - (૧-ભૂંડ), (૨-વિશુદ્ધ), (૩-અમૃત), (૪-અંતરાય), (૫-અનુકંપનીય), (૬-અભયદાન)
ષોડશક-૬ -C - (૧-શાસ્ત્રાર્થ), (૨-તુલ્ય), (૩-મૃત્યુદાયી), (૪-દેરાસર), (૫-ખરાબ), (૬-ભાવ)
ષોડશક-૭ -C - (૧-સાપ), (૨-દેવ), (૩-૩), (૪-દેવ), (૫-મહાવીર), (૬-પ્રતિમા-ભાવ)
ષોડશક-૮ -C - (૧-ગંગેશ), (૨-ઘણા હોય), (૩-૧૫), (૪-મૈત્રી વગેરે), (૫-રાજયોગ), (૬-અસંખ્ય કાળચક્ર)
ષોડશક-૯ -C - (૧-નીચગોત્ર), (૨-આજીવિકાછેદ), (૩-વજ્ર), (૪-૧૦૦), (૫-પ્રધાન), (૬-દેવપાલ)
ષોડશક-૧૦ -C - (૧-ઉત્પત્તિ), (૨-બૌદ્ધ), (૩-આજ્ઞાયોગ), (૪-૩), (૫-નિરુપક્રમ), (૬-ન હોય)
ષોડશક-૧૧ -C - (૧-અભિમાની), (૨-મિથ્યાજ્ઞાન), (૩-૫૨), (૪-સમકિત), (૫-શ્રદ્ધા), (૬-ઔચિત્ય)
ષોડશક-૧૨ -C - (૧-નામન્યાસ), (૨-ક્ષમાપ્રધાન), (૩-૫-૬), (૪-ઓસન્ના), (૫-સ્પર્શ), (૬-સિદ્ધરસ)
ષોડશક-૧૩ -C - (૧-નમનશીલ), (૨-૧૫), (૩-મૈત્રી આદિ), (૪-ધર્મકથા), (૫-મૃત્યુ), (૬-વિચારણા)
ષોડશક-૧૪ -C - (૧-યોગ), (૨-અનિર્વેદ), (૩-ઉત્સાહ), (૪-ત્રીજી), (૫-ઉદ્વેગ), (૬-ઉદ્વેગ)
ષોડશક-૧૫ -C - (૧-અનુભવ), (૨-દ્વિતીય), (૩-કેવલજ્ઞાન), (૪-પરતત્ત્વ), (૫-ભાવ), (૬-ન હોય)
ષોડશક-૧૬ -C - (૧-શરીરી), (૨-પડછાયા), (૩-તત્ત્વરુચિ), (૪-ભારવાહક ગધેડા), (૫-પાંખ), (૬-શુશ્રૂષા)